शशिकुलभूषणसदयं मत्प्राणेश्वरविजयम् ।
प्रार्थयतेऽत्र सविनयं दुर्भाग्या जाया ॥ १ ॥
तनुरेषा मे विनता नाथपदे समर्पिता ।
ज्ञातमिदं ननु भवता लुप्ता किं ममता ॥ २ ॥
सुयोधनोद्गृहीतकरां वन्धू द्रष्टुं सुतराम् ।
कुरुतो मे निर्धारान् मोचय मां त्वरितम् ॥ ३ ॥
प्रतिपालयेमें समयं श्रोष्यसि वा मम विलयम् ।
प्रेषिताऽत्र मालेयं तेऽभिज्ञाने ॥ ४ ॥

(स्वगतम्)

अतः प्रत्यभिज्ञानार्थे रत्नमालां दत्वा केनापि सहेमं सन्देशं मे प्रेषयन्ती सुन्दरी राक्षसान्तरायान्न तत्कर्तुं समर्थाऽभवदिति ज्ञायते । अस्तु । चरमे गीतिपादे किं संदिष्टं प्रियया तत्पठामि । (वाचयति ।)

हरति रिपौ निजदारान् तीर्थेषु कथं यात्रा ।
भूत्वा संन्यासिवराः मां दासीं नयत ॥ ५ ॥

(दुःखाकुलो भूत्वा)

हर हर ! हृदयविलयनमेवान्तिमशब्दैः । प्रिये, अस्मिन् मर्मच्छिदि लेखने न तृणतुल्योऽपि ते दोषः । त्वदवस्थां विलोक्य तवेदं लेखनं विनयमर्यादावतारं मन्ये । (किंचिद्विमृश्य) तथास्तु । तवोपदेशानुसारेण संन्यासमेव ग्रहीष्यामि । ततश्च तव सन्देशपत्रस्य पुनः पुनः पठनं माल्यानया च त्वन्नामजप एव कर्तव्ये । नान्यद्विधेयम् । संन्यासग्रहणं निश्चितमेव । संन्यासस्तु त्रिदण्डो भवितुमर्हति । तेन स सत्पुरुषोपदेशोऽपि शिरोधृतो भवेत् । (उत्थाय)

(साकी)

प्रिया सुभद्रा घोरवनेऽस्मिन् निशाचरेणानीता ।
जाने न पुनः कथं निगूढा सहसा सैवं जाता ॥
मायामापन्नः । अथवा दृष्टोऽयं स्वप्नः ॥१ ॥

अस्तु । किमतिविमृश्यात्र । यन्निर्धारितं तदेवाचरणीयम् । (इति निष्क्रान्तः ।)

॥ इति प्रथमोऽङ्कः ॥

# अथ द्वितीयोऽङ्कः ।

(आसनस्थः कृष्णः प्रविशति ।)

**कृष्णः** –(नेपथ्याभिमुखं) कः कोऽत्र भोः ।

**द्वारपालः** –(प्रविश्य) अयमहं द्वारपालो महाराज ।

**कृष्णः** –चक्रदण्ड, अपि ज्ञायते कुत्र ननु वर्तत आर्यबलरामः ?

**द्वारपालः** –जानामि देव। श्रीगर्गमुनिदर्शनार्थं तदाश्रमं गतो महाराजो हलधरः।

**कृष्णः** –(स्वगतं) साधु किलेदम्। मत्पक्षपात्युपाध्यायो निःसंशयमेतत्प्रसङ्ग-समुचितमेव तस्मै किमपि निरूपयिष्यति । (प्रकाशं) यदा ज्ञायते स इत आगच्छतीति प्रथमं तावन्मे निवेदय ।

**द्वारपालः** –यथाज्ञापयति देवः । (प्रणम्य निष्क्रान्तः ।)

**कृष्णः** –(स्वगतं) किं कथ्यते । यदि ज्येष्ठ आर्योऽभिनिविष्टो नाभविष्यत् तदा तत्समः पुरुषो न भूतपूर्व इति वक्तुं नैव प्रत्यवायः । न ममापि तस्य प्रतारणायां हेतुरभविष्यत् । परं किमत्र क्रियताम् । दुर्योधनायैव सुभद्रा प्रदेयेत्यभिनिवेशं नैव स जहाति । अन्यतस्तु, सुभद्रा धनञ्जयाद-न्येनोद्वहने प्राणान्मुञ्चामीति निर्धार्यावस्थिता । अस्यां शृङ्गापत्तौ मम कृतिरेव समीचीनेति गर्गमुनिनापि समाश्वासितोऽहम्। अयं व्यूहः समूलं ननु मया रचयितव्य आसीत् ।

(सरणिः–समज धर गळ्या)

कारितं चौरैः । द्विजगोधनहरणं पार्थं गमितास्ते शरणम् ॥
आयुधागारे । धर्मराजशयनं सदारं नरेण लोकयनम् ॥
कारितं तेन । मुनेर्नियमवचनं कृतं तीर्थेषु परिव्रजनम् ॥
साधितं निपुणम् । नारदोपगमनं तथा द्वारकावृत्तकथनम् ॥

यत्सत्यं यद्यर्जुन इन्द्रप्रस्थनगरेऽधुनासीत् तत्पाण्डवानां यादवानां चापश्रिमेलनं समराङ्गणे ह्येवाभविष्यत् । अतो यदिदं सर्वं मया संपादितं तत्समुचितमेव । कति किल तन्त्राणि मया समाहितानि समाधेयानि च ।

( दिण्डी )

वशे गर्गमुनिर्मया स्थापितोऽयम् ।
चरमतिथिनिश्चय इतः कृतस्तेन ॥
वरं परतो मंगलं दिनं नासीत् ।
चतुर्मासस्यावधिः प्राप्त एवम् ॥

समुचितसमये सुभद्रां निगूहयितुं विश्वासार्हो राक्षसोऽपि स्वगृह एव संप्राप्तः । अतस्तेन सर्वाः क्रिया यथोपदेशं निर्विघ्नं संपादिताः । प्रथमं सुभद्रां दर्शयित्वा पुनस्तस्य अजानत एवादर्शनं प्रापिता । अत एवोदासीनेनार्जुनेन संन्यासः स्वीकृतः । न चेन्नैतत्तेन वीरेणाङ्गीकृतं स्यात् । अपि च सुभद्राक्षरानुकारिभिरक्षरैर्मया लिखितं तेनाधिगन्तव्यं संदेशपत्रमपि विशिष्यतेऽत्र । सुभद्रा पुनः समासादितेत्यानन्दकरं वृत्तमाकर्ण्य, अनन्तरं चतुर्मासावधि मङ्गलदिनं नोपलभ्यत इति कृत्वा, दुर्योधनादयः संबन्धिनश्चतुर्मासान्ते विवाहमङ्गलं संपादनीयमित्याश्वासिताः, हस्तिनापुरं प्रतिनिवृत्ता एव । आरब्धं महतांशेन सिद्धमद्य । अनन्तरकरणीयमनुसन्धातव्यम् ।

( सरणिः — शिवाङ्गेची वाट न पहातां )

संन्यासी भूत्वाऽयं पार्थो रैवतके निवसन्
प्रियां सुभद्रां किल प्रनष्टां चेतसि कल्पितवान् ॥
केवलवैराग्यमयीं मूर्तिं संप्रति दर्शितवान्
ब्रह्मनिष्ठवेदान्ती भूत्वा विषयं धिक्कृतवान् ॥
प्राणायामे कुम्भककरणैर्योगं साधितवान्
मनसि सुभद्रामूर्तिं धृत्वा ध्याने निष्ठितवान् ॥
अनुकूलं ननु मे सर्वमिदं सांप्रतम् ।
आचरणमवितथं यतेर्नु सकलैर्मतम् ॥
नासिकाग्रदृष्ट्योपविशत्ययमविरतम् ।
आर्यहलधरो निर्व्याजमना यतिमेतं दृष्टवान्
परमपूजको यतेर्भवेदथ दिवानिशं स इयान् ॥

यथायं यतिराजो द्वारकायां प्रसिद्धो भवेत् जनसमुदायश्च तद्दर्शनलिप्सुर्भवेत्तथानुष्ठेयम्। अत एव मम मित्रं वक्रतुण्डो ब्राह्मण एतस्मिन्कार्ये नियुक्तः। किं नाम तेन कृतं भवेत्? (नेपथ्याभिमुखं दृष्ट्वा) इत एवागच्छति स ब्राह्मणः। कियन्त्वस्य गतिगौरवं कीदृशी च मुखश्रीः। अस्य वक्रतुण्ड इति नामान्वर्थकमेव सम्यक्।

(ततः प्रविशति विदूषकः।)

**विदूषकः**—हुश्। (श्रान्तं निःश्वस्य) न सुज्ञेन कृष्णोऽयमनुवर्तनीयः। भोः, अद्य प्रत्यूषस्येव रैवतकगिरिवनेषु व्याध इवाहं तेन भ्रामितः। ननु म्रियतां स यतिः। किमस्य तेन कार्यं न जाने। चरणौ ममेमौ भूरिश्रान्तौ। तस्मिन् खलु वने कण्टका अपि कियद्दृढाः। उपानहं संभिद्य मम पादं प्रविष्टाः। अयमेवाद्यतनीयो लाभः। नापि पन्थाः सम्यगुपदिष्टः। यदा सर्व एव गिरिप्रदेशो मया समाक्रान्तस्तदा स यतिरेकस्यां गुहायां दृष्टः। भवतु। एष महाभागोऽत्रोपविष्टः। तस्य सर्वमेनं वृत्तान्तं निवेद्य गृहमेव गन्तव्यम्। नो चेदन्यस्मिन् कस्मिंश्चित्कार्यगुल्मेऽयं मां निपातयिष्यति। (कृष्णमुपगम्य) वयस्य। समीचीनां दुरवस्थां प्रापितोऽद्यायं जनः।

**कृष्णः**—वयस्य, आस्यतां नाम। का ते ननु दुरवस्था। किं नाम ते संजातम्।

**विदूषकः**—पश्येमौ मे चरणौ विवरसंकुलौ। स्वस्थानस्थितेन त्वया कथं तज्ज्ञायते।

**कृष्णः**—एवमेव ननु। वीरायितं त्वयाद्येह। घृतलेपैस्तवाद्य पादसंवाहनं कारयामि। अपि प्रीतोऽसि। का नु वार्ताङ्गीकृतकार्यस्य?

**विदूषकः**—वयस्य! मा तत्र कामपि चिन्तां वह। प्रागेव मे गमनादेतावाञ्जनसंमर्दस्तत्र पुञ्जीभूत आसीद् यत्सर्वं कोलाहलाकुलमेव। कश्चित् संततिं, कश्चित्संपत्तिं, कश्चिच्चायुरारोग्यं यतिं पृच्छति। कश्चिद्दर्शनं लब्ध्वा फलभारमाहरति। एवं परमव्यतिकरो नाम तत्र। किं बहुना गदितेन।

यत्र गन्तुं पूर्वं पदमार्गोऽपि नासीत्तत्र तां गुहामुपयातुमद्य द्वादशहस्त-विस्तीर्णः शकटमार्गो जनपदयातायातैर्निर्मितः ।

**कृष्णः** —( स्वगतं ) शोभनं, सर्वं समीहितं नाम। ममेप्सितं निर्विघ्नं सिद्धिमेति।

( साकी )

**माहात्म्यं प्रख्यातं लोके यतेरिदानीं निभृतम्।**
**श्रुतिपथमायास्यति तत्सकलं तातहलभृतो नियतम् ॥**
**मम सांप्रतमिष्टम्। कार्यं स्वल्पं ह्यवशिष्टम् ॥**

( प्रकाशं ) ननु वयस्य, अल्पीयस्येतस्मिन्काले कथं नु प्रथनं यतेर्माहात्म्यस्येत्यस्ति मे कौतूहलम्।

**विदूषकः** —कथं न जानासि। पश्येदम्। अजवद् गतानुगतिको हि लोकः। एकस्मिन्विवरान्तरुत्प्लुते सकला अनुपतन्त्येव। श्रुतं मया यद् ह्यो गर्गमुनिर्निजाश्रमे कैश्चिद्द्विजैः सह संवदन्नासीत्। तदा सहसा पिशाचबाधामिव दर्शयित्वा 'अलभ्यलाभः, अलभ्यलाभः,' इति घोषयन् गन्तुं प्रचक्रमे। अन्ये ते वराका द्विजा अपि भीता इव तमनुप्रतस्थिरे।

**कृष्णः** —ननु सत्यमेतत्। ततस्ततः।

**विदूषकः** —ततः परं तेन द्विजवृन्देन सह स मुनी रैवतकपर्वतं जगाम। यत्र स यतिर्गुहायामासीनस्तत्र गत्वा साष्टाङ्गं तत्पादयोः प्रणिपत्याञ्जलिं बद्ध्वा तस्य पुरस्तस्थौ। यदेदं नगरे ज्ञातं यदेष महामुनिरपि तं यतिं शिरसा प्रणमतीति तत् किं कथयितव्यम्। सर्वे नगरवासिनः शलभसंपाता इव वृन्दशः समापतिताः।

**कृष्णः** —( स्वगतं कृतज्ञतया ) गुरुराज, अस्य शिष्यस्य लज्जारक्षणे कियदिदं साहसमनुष्ठितं भवता। अहह ! न गुरोः परमदैवतमिति शास्त्रवचनं सत्यमेव। यतः—

( सरणि :—धन्य दिवस आज वर्णू )

को नु वद मे त्वादृशो हि विनेता । दयितो वा त्राता ॥
यावदिष्टं कष्टानङ्गीकर्ता । भवदुःखं हर्ता ॥ ध्रु० ॥
त्वं हि विष्णुस्त्वं हरस्त्वं धाता । त्वं विश्वं भर्ता ॥
त्वं हि व्याप्यव्यापकयोर्निर्माता । अतिमायो हि तथा ॥ १ ॥
त्वं हि शिष्ये पुष्टिभर्त्री माता । त्वं विद्यादाता ॥
त्वं हि यच्छसि तत्त्वनिधिं परवेत्ता । बलवतस्त्वमविता ॥ २ ॥

किं कथ्यताम् । यदत्र गुरुमहाराज एव बद्धपरिकरस्तन्मे कार्यं निर्विघ्नं सिद्धमेवेति मन्ये । ( प्रकाशं । ) वयस्य फलमोदकादि यद् यतिनैवेद्यार्थं ते दत्तं, तत्तस्मै समर्प्य, प्रसादमात्रं किंचिदवशिष्टं त्वया मत्कृते प्रत्यानीतं भवेन्नु ।

**विदूषकः**—( स्वगतं । ) विस्मरेदिदमयमिति मतं मया । शठस्त्वसौ कथं खलु विस्मरति । ( प्रकाशं । ) भो वयस्य, यदा मार्गभ्रष्टः पशुरिव तस्मिन् शैलेऽहं भ्रान्तस्तदाऽऽतपोष्मणा प्राणा मे पर्याकुलाः संजाताः । अत्रान्तरे कश्चिद्रम्यो निर्झरोऽपि दृष्टिपथमायातः । तदा तत्रोपविश्य, यतिपदे नैवेद्यं समर्प्य, मयैवाशेषं तद् भक्षितं, ततश्चोदकं पीतं, तदैव पुनरहं किंचित् प्रकृतिमापन्नः । यदि त्वया स फलाहारो न दत्त आसीत् तर्हि ( सगद्गदस्वरं ) तवेदं मित्रं तत्रैव पञ्चत्वं गतमभविष्यत् । ( अश्रूणि प्रमार्ष्टि । )

**कृष्णः**—त्वया समासादितं खाद्यं वस्तु कथं बहिरुदरं तिष्ठेत् । भवतु । मदर्थे तु किंचिल्लेशमात्रमपि प्रसादस्यानेतुं यतितं भवता ननु ?

**विदूषकः**—कथं नानीतम् । तद्वेष्टनपत्राण्येतानि दृश्यन्तां, केवलं त्वदर्थे । ( पत्राणि दर्शयति हसति च । )

**कृष्णः**—वरम् ! वरम् ! लप्स्यसेऽस्य निष्कृतिम् ।

**विदूषकः**—ननु वयस्य, किंचित्ते प्रष्टव्यमस्ति । भवता तस्य यतेः संबन्धे महानयं खटाटोप[1] आरब्धः, तमेव यतिमविरतं मनसि च करोषि, किमत्र कारणम् ?

**कृष्णः**—( सोपहासं ) कुतः कारणमिह । महाविरक्त ईश्वरांश एव स यतिः । अतस्तेन द्वारकायामुषितव्यं, तद्दर्शनं नित्यमस्माकं च सुलभं स्यादित्येवात्र हेतुः।

---

१ खटाटोपः=महान् व्यवसायाडम्बरः । महाराष्ट्रीयशब्दोऽयम् ।

**विदूषकः**—स महान् यतिरिति कथं ते विदितम्।

**कृष्णः**—अयि, गर्गमुनेः।

**विदूषकः**—आम्। तर्हि गर्गमुनिरप्यस्मिन्कपटप्रबन्धे सहाय इति निश्चयेन ब्रवीमि। महाराजहलधरमुपगम्यैनमभियुञ्जे।

**कृष्णः**—अपसर रे मूर्ख। किं तेऽपकृतं तेन, येन तमभियोक्तुमीहसे।

**विदूषकः**—(सक्रोधं) शृणु यदपकृतं तेन। ये स्त्रीपुरुषवृन्दा यतिसमीपं संमिलितास्तेषु कलत्रमस्माकमप्यासीत्। दास्याःपुत्र्या नारंगफलपरिपूर्णकरंडं तत्र रिक्तं कृत्वा स यतिर्नमस्कृतः। नाहमात्मानं तस्यै दर्शितवान्। मम क्रोधस्त्वेतावान् प्रवृद्ध आसीद्, यदेतेन दण्डकाष्ठेन तं यतिं सभाजयितुं कामः समुद्भूतः।

**कृष्णः**—(सहास्यं) भवतु। को नु वरो याचितो भवत्कुटुम्बिन्या।

**विदूषकः**—मादृशः सुन्दरः पतिर्जन्मान्तरेष्वपि भवेदित्येव।

**कृष्णः**—अहह! त्वां सौन्दर्यवन्तं मन्तुं निखिलजनानां नयनैः प्रनष्टैरेव भवितव्यम्।

(ततः प्रविशति त्वरयन् द्वारपालः।)

**द्वारपालः**—(सप्रणामं) देव, प्रत्यागतो महाराजः।

**कृष्णः**—(त्वरयोत्थाय) कुत्र वर्तते तत्रभवानार्यः।

**द्वारपालः**—आश्रमात्प्रतिनिवृत्तो महाराजो देवीसुभद्रामन्दिरं गतः। भवांश्च तत्रैव नेतव्य इति तेनाज्ञप्तोऽहम्।

**कृष्णः**—एवं भवतु। (विदूषकं प्रति) आर्यदर्शनाय भगिनीमन्दिरं गच्छामि। भवानपि निजगृहं गत्वा विश्राम्यतु।

**विदूषकः**—विजयस्व वयस्य! [इति निष्क्रान्तौ।]

(ततः प्रविशन्ति मञ्चकमधिशयाना सुभद्रा, संनिहिते दास्यौ, पार्श्वस्थितश्च बलरामः।)

**बलरामः**—(एकतरां दासीं प्रति) अपि कुशलिनी ते स्वामिनी?

**सारङ्गनयना**—तदाप्रभृति भ्रान्तवदस्वस्था देवी। निद्रिताऽपि सहसा सभयं जागर्ति। तस्मिन् दिने प्रनष्टासौ यदा पुनरस्मिन्नेव मन्दिरे मञ्चके

शयाना समासादिता तदा मयैव समुपसृत्य प्रबोधिता । तत्क्षण एव तया भयार्तं क्रन्दनं कृतं भ्रान्तवच्च सर्वत्रावलोकितम् । तदा मया 'स्वमन्दिर एव तिष्ठसि मा भैषीः' इति समाश्वासितापि न प्रकृतिमापन्ना ।

**कृष्णः**—(ससंभ्रमं प्रविश्योपसृत्य च) किं नाम तदा तयोक्तम् । केवलं तस्याः शब्दानेव कथय ।

**बलरामः**—(सावज्ञं ।) हं, भीता सा कन्यका । किं पृच्छसि किमुक्तवतीति ।

**कृष्णः**—आर्य नैवम् । प्रहरं यावत् साऽदृश्याऽऽसीत् । ततस्तस्या वचनज्ञानेन कदाचिज्ज्ञास्यामस्तथाभूतं वृत्तान्तमिति पृच्छामि । मम मतिः कुण्ठितैव ।

**सारङ्गनयना**—न स्मरामि किमुक्तं तया तदानीम् ।

**कुरङ्गनयना**—स्फुटमेव स्मरामि तदानींतनं तस्या वचनम् ।

**कृष्णः**—त्वमेव कथय तद्वचनम् ।

**कुसुमावती**—तयोक्तं—'कुत्र स पुमान् यस्य वसनानि रुधिररक्तानि' इति ।

**कृष्णः**—यदस्यार्थो भवेद् भवतु स नाम । न मे मतिस्तत्र प्रभवति ।

**बलरामः**—अरे, ज्ञातं तत्सर्वं मया । नात्र चिन्तावसरः ।

**कृष्णः**—किमुक्तम् । सुभद्रा कथमन्तरिता कथं च पुनर्दृष्टा सर्वमेतज्ज्ञातं भवता । तन्मे कथयितुमर्हति भवान् । तथा मम हृदयमपि विचिन्तं भविष्यति ।

**बलरामः**—किमुक्तिभिः । अकल्पितं यदेदं सर्वं समापन्नं तदा सहस्रकल्पनाविष्टं मे मनः ।

(सरणि :—अभाग्याचे घरीं बाबा कामधेनु आली)

श्रुता यदेयं मया सुभद्रा नष्टासौ वार्ता
अनलैर्ज्वलितं सर्वाङ्गं ननु हृद्ग्रन्धास्त्रुटिताः ॥
कच्चिच्चेतसा मतं तया किल प्राणास्ते त्यक्ताः
कच्चित् तर्कितं बलादसौ वा धनंजयेन हृता ॥

कृष्ण, किं कथयेयम् ! इदमपि मनसा शङ्कितम् । विषादमेष्यति भवांस्तथापि कथये ।

कच्चित् तथा चित्तेन शङ्कितं त्वया निगूढा हिता
विकल्पावलिर्बहुप्रकारा मे चेतस्युदिता ॥

यदा च पुनः सा स्वमन्दिर एव शयाना समधिगतेत्यशृणवं तदा वितर्कद्वय-निवृत्त्या तवैव कपटजालमिदमिति निश्चितमासीन्मया ।

**कृष्णः**—आर्य, नन्वद्याप्येवमेव मन्यते भवान् ।

**बलरामः**—(कृष्णहस्तं गृहीत्वा) मा ! मा खलु ! तत्र गर्गमुनिना संशय-निवृत्तिः कृता ।

**कृष्णः**—यत्सुभद्राऽतर्कितं तिरोहिता तत्र किमुक्तं तेन ।

**बलरामः**—तेनोक्तं 'यक्षकिन्नरजातिषु महाप्रबला मायाविन्यो यक्षिण्योऽन्तरिक्षे निवसन्ति । सुन्दरराजकन्यानां विवाहसमये चमत्कारान्तरं क्वचिदेता विदधति । न तु विपरीतहेतुना । किं तु वरपक्षे वधूपक्षे वा तेषां पूर्वप्रपन्नः कोपः संभवति । पुराणान्तरेषु चैवंप्रकारा घटना निर्दिष्टा उपलभ्यन्त' इति ।

**कृष्णः**—किमासामत्रास्मासु कोप उत दुर्योधनादिष्विति विषये किंचिद्वि-शदीकृतं महाराजेन गुरुणा ।

**बलरामः**—असौ वदति वरपक्ष एवैष कोपः । अतस्तैर्ग्रहशान्तिः कर्तव्या । ततो विवाहमङ्गलमविघ्नं संपत्स्यते । अद्यैव दुर्योधनायैवं लिखित्वा प्रेषितो लेखः । पश्चादेवाहमत्रोपेतः ।

**कृष्णः**—(सानन्दं) गुरुदेव, सत्यवृत्तान्तं कथयित्वा दोषान्मोचितोऽहम् । तत्कथमत्रानृण्ये समर्थः । कियती मयि ममता ।

(सरणिः—उधोजी प्यारे दिलका दिलमें रही)

**मयि निरवधिकं ते प्रेम गुरो । ते प्रेम गुरो ॥ ध्रु० ॥**
**महतो दोषारोपात्प्रेम्णा मुक्तं मामकरोः ॥ १ ॥**
**शिष्यतापलयिनी तव वाणी स्यन्दो ह्यमृततरोः ॥ २ ॥**
**त्वया दयाजलघनेन सकलं सरः कृतं हि भरोः ॥ ३ ॥**

(बलरामं प्रति) यद्यप्यहमर्जुनपक्षपाती तथापि कपटेनैवं भवन्तं वञ्चयेयमिति कथं चिन्तितमिह भवता।

**बलरामः**—कृष्ण, प्रसंगोपात्ताः कुतर्का न परमार्थेन ग्रहीतव्याः। अलं तैः। सर्वे विघ्ना अपोहिता विवाहश्चापि चतुर्मासावसाने निश्चितः। अत्र दुर्योधनादीनां प्रवासश्रमो व्यर्थीभूत इत्येव दूये।

**कृष्णः**—आर्य, तत्कथंचिदपि निराकरिष्यामः। अपि तु सुभद्रा कथं निरामया भवेत्। विपरीतं पश्यति। अन्नं द्वेष्टि। दिवसद्वयेनैव निष्प्रभासौ।

**बलरामः**—अये, शुभवर्तमानकथनं विस्मृतमेव मया। अस्मिन् रैवतकशैले कश्चिन्महासमर्थो वैराग्यशाली यतिर्गुहायां निवसति। गर्गमुनिस्तं विशेषतः प्रशंसति। तस्यैतच्चरणतीर्थोदकं रक्षामंजूषिका चेयमभिमन्त्रिता। गर्गमुनिना तस्माद्यतेरधिगम्य ममेदं प्रदत्तम्। उक्तं च। तीर्थोदकं सुभद्राया वपुषि सेचनीयं मंजूषिका दक्षिणहस्ते बन्धनीया। ततः सर्वभयविमुक्ता सा स्वां प्रकृतिमापत्स्यत इति।

**कृष्णः**—साधुतरमेतत्। तत् को विलम्बः। (दासीं प्रति) यदि प्रबोधनवेला संजाता तर्हि देवीं मन्दं प्रबोधय।

**कुसुमावती**—चिरं निद्रितैषा प्रबोधनसहा। (मन्दं विधूय) महादेवि, प्रबुध्यस्व।

**सुभद्रा**—(सहसा सभयमुपविश्य, ससंभ्रममितस्ततो विलोक्य च।) कुत्रास्मि। कुत्र स पुमान् यस्य वसनानि रुधिररक्तानि।

**कुसुमावती**—अवलोकयतु भर्ता। प्रबुद्धेदमेव प्रथमं वदति। (सुभद्रां प्रति) देवि, स्वमन्दिर एव वर्तसे। द्वावपि समीपवर्तिनौ देवौ। कुशलं च पृच्छतः।

**सुभद्रा**—(तौ दृष्ट्वा) आर्य, कृष्ण, किं तिष्ठतः। आसनमलंक्रियताम्। द्वे दास्यौ युवां, अत्र तिष्ठन्त्यावपि नासने दत्ते।

(दास्यावासने पुरः कुरुतः। उभावुपविशतः।)

**बलरामः**—कथं भवती। अपि कुशलं ते।

**सुभद्रा**—कुतो मे विकृतिः। सुखासीनाहं ननु। भोजनं यथेष्टं करोमि। सर्वतः सौख्यमेव मे। को ब्रूतेऽकुशलिन्यहमिति। आर्य, न मामेवं लज्जापयितुमर्हसि। दुरारोग्येन मरणमर्जयितुं नाहं भागधेयप्रिया।

**बलरामः**—नैवं वक्तुमर्हसि। न ते कुतोऽपि दोषः समतीते वृत्तान्ते। जानीमश्च वयं कथं तत् सर्वमापतितमित्यपि। न ते कश्चनापराधस्तत्र।

**कृष्णः**—भगिनि, आर्येण कस्माच्चित् समर्थयतेस्तीर्थोदकं समानीतम्। तस्य सेचनेन तव सर्वापि बाधा नश्येत। तथा तस्मादेव लब्धा मञ्जूषिका तव हस्ते निबद्धैव त्वामकुतोभयां करिष्यति।

**सुभद्रा**—(स्वगतं) कथं मे संतापोऽनेनोदकेन शाम्येत्। (प्रकाशं) यत्किंचित् कर्तुकामा यूयं तत्संपादयत।

**कृष्णः**—आर्य, अस्मत्सुभद्रासमा मतिमती कन्यका न क्वापि विद्येत। ननु न मन्यते भवान् न तस्या विषादो विवाहविघ्नतो दुर्योधनादिनिवृत्तौ चेति।

**बलरामः**—कथं न सा मन्येत। जानीतेऽसौ सकलम्। नेयं बालिकाधुना।

**कृष्णः**—सुभद्रे, चातुर्मास्यसमाप्तौ प्रथममङ्गलमुहूर्ते सार्वभौममहाराजदुर्योधनस्याग्रमहिषी भविष्यसि। कियत्तव ततो माहात्म्यम्। अपि संवदिष्यसि मया सह।

**सुभद्रा**—(सभ्रूभङ्गं) को नाम हतकतापोऽयम्। कदा नु मे मस्तकशूलोऽयं विरमेत्।

**कृष्णः**—आर्य यथागुर्वादेशं वारिसेचनं मञ्जूषिकाबन्धनं च क्रियेताम्। तथा प्रकृतिस्था भविष्यति।

**बलरामः**—एवमेव। (नेपथ्याभिमुखं प्रेक्ष्य) आनीयेतां तीर्थोदकमञ्जूषिके।

**कुसुमावती**—(तीर्थोदकमञ्जूषिकाहस्ता प्रविश्य) इदं गृह्यतां महाराज।

(बलरामस्तस्यामुदकसेकं करोति मञ्जूषिकां च दक्षिणहस्ते बध्नाति।)

**सुभद्रा**—(स्वगतं) किमिदं वैपरीत्यम्। अपरीक्ष्य रोगनिदानं कृता उपचाराः कथं सिध्येयुः। गुर्वाज्ञा तु पालनीयैव।

**बलरामः** – न युक्तं सुभद्रामत्र तिष्ठन्तीं विधातुम् । विनोदयत्वियं निजमनः सखीजनेन सह । गच्छावस्तावत् ।

**कृष्णः** – यथाज्ञापयत्यार्यः । (दास्यौ प्रति) यदि किंचिन्न्यूनाधिकं स्यात् त्वरितं संदेष्टव्यमस्मान् प्रति । अस्या मनोऽनुवर्तिन्यौ भवतम् । (सुभद्रां प्रति) आमन्त्रये त्वामिदानीं भगिनि ।

(अनुक्त्वा सुभद्रा मस्तकं धुनाति ।)

**बलरामः** – कृष्ण, स यतिरधुनैव द्रष्टव्य इति मया निश्चितम् । तन्मया सह त्वयागम्यताम् ।

**कृष्णः** – आर्य, भवद्गमनमेव पर्याप्तं मन्ये । ममागमनेन किं प्रयोजनम् ।

**बलरामः** – मैवम् । गर्गमुनिनाऽऽज्ञापितोऽहं कृष्णेन सहागच्छेति ।

**कृष्णः** – को नाम तस्याज्ञामुल्लङ्घयितुं प्रभवति । प्रस्थीयताम् । एष सज्जोऽस्मि ।

(उभौ निष्क्रान्तौ ।)

**सुभद्रा** – सारंगनयने ! मत्स्नानसिद्धतां विधेहि । गच्छ । अहमपि किंचित्कालतस्तत्रागमिष्यामि ।

**सारङ्गनयना** – यथाज्ञापयति देवी । (इति निष्क्रान्ता ।)

**सुभद्रा** – सखि कुसुमावति, सा दुष्टदासी नीचैर्गतेति सम्यङ् निरीक्ष्य, सोपानद्वारं पिधाय, अर्गलं च समारोप्य प्रत्यागच्छ ।

**कुसुमावती** – यथाज्ञापयति देवी । (द्वारपिधानार्थं गच्छति ।)

**सुभद्रा** – तस्याः सारङ्गनयनाया दर्शनेन शरीरसन्तापो महान् मे जायते। जल्पिकैषा किल। यद्यद् वदामि करोमि वा तत्सर्वं गत्वा रेवतीदेव्यै निवेदयति। गुरुभ्रातृजाययैतदर्थमेव साऽत्र नियुक्तेति मन्ये । अतः परमवहितया नाम मया स्थातव्यम् । न किमपि मनोगतं तद्दासीसंनिधौ निगदितव्यम् । इयं कुसुमावती तु नूनं मयि स्निह्यति । मम दुःखं प्रत्यक्षीकृत्य विषीदति । किं पुनः कुर्यात् । न तद्वशे किंचिदपि । (कुसुमावत्येति ।)

**कुसुमावती** – निर्गतायां सारङ्गनयनायां पिहितं द्वारं कीलितं च ।

**सुभद्रा** – सा पिशाचिका तव गमनपर्यन्तं सोपान एव ननु स्थिता ।

रुक्मिणी :— तव तस्याग्रमहिष्याः पुरतोऽस्माभिरपि प्रणम्यं भविष्यत्काले ।

[ द्वितीयोऽङ्कः । पृ० ४१

**कुसुमावती**—यथाह देवी । मयि दृष्टायामेवाधस्ताद्गता सा ।

**सुभद्रा**—सखि कुसुमावति, कदा मे विघ्नशान्तिर्वाञ्छितसिद्धिश्च भवेताम् । अथवाऽलं सुखाशया । भगवन्,

( सरणिः—शिव शिव फसलों साजणि येउनि )

**व्यर्थं मे नृपवंशे जननं**
**पाशनं सर्वदा कण्ठधनम् ॥ धृ० ॥**
**स्वातन्त्र्यं न कदाप्यनुभूतं**
**बन्धे चिरवसनम् ॥ १ ॥**
**निर्धनवंशे जननं यदि मे**
**स्यान्न च मम हवनम् ॥ २ ॥**

**कुसुमावती**—देवि, दिवसद्वयेऽस्मिन् न प्रकृतिस्था भवती । तत्रायं सन्तापः कथं सह्यः स्यात् । ( हस्तेन पृष्ठं परामृशति । )

**सुभद्रा**—ब्रूहि तत्कथं मयाचरितव्यम् । ( बाष्पगद्गदस्वरेण ) कस्याशया मनः समाधास्यामि । अथवा—

( सरणिः—जो चिदानंदकंद )

**वद शरणं मे ननु कुतो यथा स्याद् दुरितानां हरणं**
**भजेयं सततं तं चरणम् । सखि सदा ॥ धृ० ॥**
**बान्धवाप्तसुहितैषिणां प्रार्थनैर्मनोव्यथाकथनं**
**निखिलं विफलं नूनम् ॥ सखि सदा ॥ १ ॥**
**मम मातृजनकयोः परं विषादो वीक्ष्य मेऽभिभवनं**
**न यत्नैस्तयोस्तापशमनम् ॥ सखि सदा ॥ २ ॥**
**मुकुलितैः करैर्यादवाः समुपतिष्ठन्ति मां सनमनं**
**प्रतीपं तदाचरणम् ॥ सखि सदा ॥ ३ ॥**

**कुसुमावती**—देवि, सर्वं हि यथामनोरथं परिणमेद् भवत्याः । कष्टकराणि कतिचिद्दिनानि तु सोढव्यानि ।

**सुभद्रा**—कस्मादेवं मन्यसे ।

**कुसुमावती**—पश्यतु भवती । दिवसद्वयपूर्वं सर्वं निराशामयं दारुणमासीत् । किं तु विवाहमुहूर्तसमय एव सपदीश्वरेणैवं भवती तिरोधानं नीता

तदनिष्टाद् रक्षिता च । अधुना न किंचित्कृच्छ्रं चतुर्मासपर्यन्तम् । को नाम जानीते किमेतस्मिन्नवकाशे भविष्यति ।

**सुभद्रा** – सत्यं ब्रूषे । नन्वहमपि कामं विस्मयाविष्टा तेन घटितेन । तस्माद्दिनात्प्रभृति यदा यदाहमेकाकिनी तिष्ठामि तदा तदा विषयमेनमेव चिन्तयामि । स्वप्नवत्सकलं मेऽवभासते ।

**कुसुमावती** – देवि, ननु सुष्ठु किंचित्स्मृतं मया । बहु मन्त्रितं मनसा प्रष्टव्यमिति । नावसरं तु लब्धवती । अतोऽधुना पृच्छामि । देवि, कच्चित्स्मरसि तिरोधानकालवर्ति किंचित् ।

**सुभद्रा** – आम् । अत्रैकदा सुप्ता घोरवने कस्मिंश्चित्प्रबुद्धा ।

**कुसुमावती** – किमिदमद्भुतम् । को नु त्वां तत्र नीतवान् ।

**सुभद्रा** – अये, प्रथमतो मया कल्पितं निजोपवन एवास्मीति । कियानपि कालस्तत्र संतोषेण यापितः । यदा त्वनुसन्ध्यं तिमिरं प्रादुरासीन्, न चैकतरापि युवयोः समायाता, तदा त्वां सारङ्गनयनां च तारस्वरेण शब्दायितुमारब्धम् ।

**कुसुमावती** – ( वक्षसि हस्तं निधाय ) ततस्ततः ।

**सुभद्रा** – ततो रुधिरलाञ्छितवसनः सुन्दरः कश्चिद् युवा मम पुरतः समुपस्थितः ।

**कुसुमावती** – को नामैष स्यात् ।

**सुभद्रा** – न पृष्टं मया तस्य नामग्रामादि । स तु जगाद 'न भवती निजोपवने, घोरे तु वनेऽस्मिन् । न वा जाने कथमिह समागता' इति ।

**कुसुमावती** – अविधा । न तेनापि ज्ञातं कथं भवती वने तस्मिन् गतेति । हन्त । सर्वमेव चमत्कृतम् । ततस्ततः ।

**सुभद्रा** – कथं वनेऽहमगच्छम् । आर्यस्तज्जाया च मां किं वदिष्यतः । एवं चिन्तयमानाहं भयोर्मिहता मूर्च्छिता । प्रबुद्धा च पुनः स्वमन्दिरे ।

**कुसुमावती** – देवि, यद्येष स्वप्नस्तत्त्वान्तर्धानं पुनरागमनं सर्वं सत्यमेव । यदि सत्यं तत्कथमेतत्संभूतमिति न मतिनिर्णयः । न जाने किमेतत् स्यात् ।

**सुभद्रा** — सखि, अपरं चाद्भुतद्वयं तद्दिने संपन्नम्।

**कुसुमावती** — किं नामेदमपरम्।

**सुभद्रा** — पश्य। यदा स पार्थो द्वारकायामासीत् तदा स्वयमेव कौशल्येन क्षौमचित्राङ्कितं दुकूलं कृत्वा, तत्र च तस्य नाम रचयित्वा, तस्मै प्रीत्या मया प्रदत्तम्। तत् सखि, मम देहे स्थितमदृश्यत। तदैव च तेन स्वकण्ठादुद्धृत्य मत्कण्ठे समर्पिता रत्नमाला, सखि, प्रनष्टा।

**कुसुमावती** — यद् यच्छ्रूयते तदकल्पितं किल। अपि तु देवि, कथयाम्यह-मीश्वरस्तव मनोरथान् निःसंशयं पूरयेदिति।

**सुभद्रा** — कुत इदमुच्यते।

**कुसुमावती** — भवतु कथमपि। त्वयात्र मद्वचने विश्वसितव्यम्।

**सुभद्रा** — मा मैवम्। कुतो मे भाग्यमियत्। सति भागधेये कथमेतत् संभवति।

(सरणिः — श्रीहरिच्या वेणुनादें मन माझें मोहिलें)

**रोचन्ते तीर्थयात्रास्तस्मै किं सांप्रतम्।**
**मयि नष्टं प्रेम किं वा हरिहृदये संचितम्॥**
**अन्धसुते हलभृतो वा प्रेमेदं नूत्थितम्।**
**अनुकूला रेवतीयं जातैतद्वाद्भुतम्॥**

**कुसुमावती** — देवि, उभौ महाराजावत्रास्ताम्। तयोः संभाषणाचरणादिभ्य-स्तर्क्यते दुःखितौ तौ विना कारणं ते पीडा कृतेति।

**सुभद्रा** — मम सान्त्वनार्थं त्वमेवं ब्रवीषि, नान्यतः। कुतस्तयोरनुतापो नाम। (सगद्गदस्वरं) सखि, न श्रुतं नु त्वया तस्य कृष्णस्य वचनम्। चातुर्मास्या-वसाने नामाहं तस्य वराकस्याग्रमहिषी भवित्री। ततोऽहं मानिनी भवेयमित्युक्तवान्। ननु भ्रातुः शोभते नृशंसमिदं वचः। पश्य सखि।

(रागः — जोगी, तालः — धुमाळी)

**मनोगतमिदं सर्वथैव मे कृष्णो जानीते।**
**सत्येवं मयि हतभागिन्यां दुष्करमिह कुरुते॥**
**धनंजयायैवाहं देया तेन पुरा दिष्टे।**
**आशाबन्धं किमिमं छेत्तुं हन्तुं मां यतते॥**
**कृष्णदर्शनो बाह्यतो यथा तथान्तरप्यास्ते।**
**न कोऽपि शरणं तारकनौका यदि मां मज्जयते॥**

**कुसुमावती** – ( स्वगतं ) किं नु विधेयमत्र । हा धिग्, वर्धतेऽस्याः संतापः । अन्यतोऽवधानं नेष्यामि । ( प्रकाशं ) देवि, पार्थमहाराजाय प्रदत्तं दुकूलं पुनर्भवती लब्धवतीत्युक्तं भवत्या । ततस्तद्दर्शनेऽतीवोत्कण्ठितास्मि कीदृशं तदिति ।

**सुभद्रा** – मा कोऽपि तत्पश्यत्विति पेटिकायां निक्षिप्तम् । यदि ते कौतूहलं तद् गत्वा प्रेक्षस्व ।

**कुसुमावती** – ( पेटिकाया दुकूलमुद्धृत्य तत् प्रसार्य निरीक्षते । ) देवि, कियदिदं ते कुशलत्वम् । अत्र चित्रितानि वल्लरीदलानि सुमनोहारीण्येव । अन्तराऽन्तरा चित्रिता विहगाः सपद्युड्डयिष्यन्त इति मे विभाति ।

**सुभद्रा** – ( दुकूलं हस्ते गृहीत्वाधो बलान्निक्षिपति । ) सखि, हतकायास्मा एवं क्रुद्धास्मि यदिदं शतशो विदारयितुं मे मनीषा ।

**कुसुमावती** – देवि, किमेवमपराद्धमनेन ।

**सुभद्रा** – सखि, शृणु ।

( सरणिः – अहा रे कृष्ण मुकुंदा )

अरसिकमिदं दुकूलं
तं सुन्दरदेहं विहायागतम् ॥
प्राणपतेः सस्नेहं
संतोषेणेदं मया प्रदत्तम् ॥
दुर्लभमिह मे स्थानं
तद् दुर्भाग्येनानेनाधिगतम् ॥
तस्मात् किमिदं भ्रष्टं
सत्संगतिविरसं किमिदं जातम् ॥
बन्धे निदधे तदिदं
मा नयनपथे मे हतकनिष्ठुरम् ॥

तद्गृहाणेदमितो निक्षिप च तस्यां पेटिकायाम् । ( दुकूलं निरस्यति । )

**कुसुमावती** – ( तथा कृत्वा स्वगतं ) यद् यत् स्वास्थ्यायास्याः प्रस्तूयते तत्तत्संताप-वृद्ध्या एव जायते। किं नु करोमि। ( प्रकाशं ) देवि, दूरमारूढो हि सविता। ततः स्नानायोत्थातुमर्हसि। काले भुक्तमन्नं स्वल्पमपि प्रकृतिस्वास्थ्याय प्रभवेत्।

**सुभद्रा** – मा स्मारय तदनिष्टं भोजनम्। विषमिव तत्संभावये। दृष्टमेव घृणां जनयति।

**कुसुमावती** – देवि, परितो जलमन्दिरमुपवने मुहूर्तमुपविशतु भवती। चरित्वा वा क्षुधापि प्रदीप्येत।

**सुभद्रा** – सखि, न प्रभवामि तत्र गन्तुम्। प्रविष्टाया एव मे वपुषि रोमाणि कण्टकायन्ते। पश्य–

(रागः – पिलु, तालः – धुमाळी )

वीक्ष्योपवनं चेतसि विरहानलैः किल प्रलयितं
शीर्षपीडनं पुष्पसुगन्धैर्भवति पुनर्निर्मितम्॥
कोकिलकूजनमथ विद्युद्वद् गगने शब्दायितं
जलयन्त्राणां वारिसीकरैः सुतरामनलायितम्॥
मन्दशीतपरिमलवत्पवनैर्वपुः कथं कम्पितं
वह्निपरीतं वेपमानहृद् दहतितरां संततम्॥
ननु विहगदम्पतीभिर्बहुकेलिः कृता
सहचरीमुखे हंसेन विसालिर्हिता
नृत्यैश्च मयूरैः सुखे हिताः स्वदयिताः॥
विलोक्य सकलं निसर्गमधुरं प्रणयं तिर्यकृतं
हृदयं व्यथितं सुकुमारमिदं पुष्पायुधशरहतम्॥

**कुसुमावती** – देवि, अविरतं तदेव मन्त्रयमाणा यदि संतप्यसे तत्कथं क्रियते। मनोऽन्यत्र रमयित्वा समाहिता भवितुमर्हसि।

**सुभद्रा**—सखि, सर्वं त्वद्वचनं समाकलये। न तु प्रभवाम्यात्मनः। सखि,

(रागिणी—आनन्दभैरवी; तालः—धुमाळी)

नच नच वचनक्षमम्। मनसो विमन्थनम्॥ ध्रु०॥
तं दुःखार्णवं धर्तुं कुतो बलम्।
संप्रति कोऽपि मे कुरुते न सान्त्वनम्।
तैः सखि दाहितं विरहानलैरलम्॥
न च मनोनियमः। अथ धैर्यशमः। कृतेर्विरमः॥ १॥
एतौ भ्रातरौ मे ननु वैरिणौ कथम्।
भासं दर्शयेते प्रीतेरथानृतम्।
हृदयं मम विध्यतो वचनैर्निरन्तरम्॥
अलमलं जीवनम्। देहि विषपानम्। सखि मोचय माम्॥ २॥

(नेपथ्ये) अयि कुसुमावति, शीघ्रं द्वारमपावृणु।

**कुसुमावती**—कासौ। ननु सारंगनयना शब्दायते।

**सुभद्रा**—न जाने किमर्थं पिशाचिका क्रन्दति। सखि, गत्वा पश्य।

(कुसुमावती गच्छति, सारङ्गनयनया सह च पुनः प्रविशति।)

**सुभद्रा**—(सारंगनयनां प्रति) स्नानसिद्धतायां प्रयुक्ता कस्मादत्रागतासि।

**सारङ्गनयना**—संविहितस्नानसिद्धता भवतीमवेक्षमाणा देव्या रुक्मिण्याहमुक्ता, देवीं शीघ्रं स्नपयित्वा वृन्दावनपरिसरे यातुं विज्ञापयेति। अत इह सहसोपस्थिता।

**सुभद्रा**—कथं देवी रुक्मिण्येवमाह।

**सारङ्गनयना**—आम्। आशु तत्रागन्तुं विज्ञापिता च भवती।

**सुभद्रा**—अहह! कतिभिर्दिवसैः स्मरति मां भ्रातृजाया। तद्गच्छामः।
(सर्वा उत्तिष्ठन्ति।)

**कुसुमावती**—अयि सारङ्गनयने, ननु स्नाता देवी कनीयसी भ्रातृजाया।

**सारङ्गनयना**—अथ किम्। अधुना वृन्दावनचतुष्के पूजां विदधाति। तत्रैवात्रभवती चाहूता।

**सुभद्रा**—केन निमित्तेनैवं शीघ्रागमननिमन्त्रणम्। ननु जानासि किमेतत्।

**सारङ्गनयना** – नाहं किंचिदत्र विषय उपदिष्टा । किं तु ज्येष्ठमहाराजेन महता संरम्भेण प्रासादे कश्चिद् यतिर्भोजनार्थमानीतः । तद्दर्शनार्थमेतद् भवेदिति तर्कये ।

**सुभद्रा** – कुतो ब्रवीष्येवम् ।

**सारङ्गनयना** – अष्टनायिकाभिः सर्वयादवस्त्रीभिश्च धूतवसनाभिर्यतिदेवदर्शनं कार्यमिति समुद्घोष्यतामिति वृद्धकञ्चुकी भृत्यानाज्ञापयत् । तन्मया श्रुतम् । तस्मादेवं भणामि ।

**सुभद्रा** – अस्तु किमपि तत् । गमनमवश्यमेव । तन्मे स्नानं शीघ्रं समापय । कुसुमावति, मम महावस्त्रं पूर्णपात्रं च गृहीत्वा तत्रैवागच्छ ।

(सुभद्रा सारङ्गनयना च निष्क्रान्ते ।)

**कुसुमावती** – कनीयस्या देव्याऽऽहूतेति वरमेव । नो चेद् देव्याः शोकसंतापः कति वर्धिष्णुः संभवेदिति न वक्तुं शक्यते । (नेपथ्याभिमुखं) हला ! कनीयसी देवी पूजार्थमुपविष्टैव । तद्देवीं गृहीत्वा सत्वरमेव गन्तव्यम् । (निष्क्रान्ता ।)

(ततः प्रविशति तुलसीपूजानिरताऽऽसनस्था रुक्मिणी । परिचारकाः पार्श्वतस्तिष्ठन्ति ।)

**रुक्मिणी** – (पूजां निर्वर्त्य) रे अशोक, देहि मे जपमालाम् ।

(परिचारको मालां ददाति । तां वस्त्रान्तर्धारयित्वा जपमारभते)

(ततो विदूषकः पूतवस्त्रधारी प्रविश्याचामति । शिखां च वस्त्रेण निर्वापयति ।)

**रुक्मिणी** – (जपं समाप्य प्रदक्षिणार्थिनी समुत्तिष्ठति, विदूषकं च दृष्ट्वा) स्नानमद्यात्रैव निर्वर्तितं दृश्यते ।

**विदूषकः** – आम् । स्वामिमहाराजप्रसादग्रहणार्थमित एवागतः ।

**रुक्मिणी** – देवरदेवेन परेद्युः कृतेन वाक्ताडनेनापि न विरमसि स्नानविलम्बात् ।

**विदूषकः** – प्रातःस्नानं मे प्रत्यूषसि निर्वृत्तमेव । इत आगच्छतस्तु मे पादेन शुनो लाङ्गूलं स्पृष्टमतो ममेदं पुनः स्नानम् ।

**रुक्मिणी** – दिष्ट्या वर्धते ते शुचितामाहात्म्यमिदानीम् । भवतु । कथं तत्र वर्तते ।

**विदूषकः**—स्वामिमहाराजस्य स्नानादिकमाह्निकं संपन्नम् । अधुना यादवस्त्रीभिर्दर्शनं क्रियते । कथं ब्रूयां देवि । प्रतिस्त्रीनमस्कारं नारायण नारायणेति वदन् स्वामी प्राणैरचिरेण वियुज्येतेति मन्ये ।

**रुक्मिणी**—अलमनेन । अपचिते सर्वजनसंमर्दे ननान्दृदेव्या सहाहं दर्शनायागमिष्यामि ।

**विदूषकः**—युज्यते । ( इति गन्तुं प्रस्थितः । )

**रुक्मिणी**—भूदेव, इमां दक्षिणां गृहाण । ( परिचारकं प्रति । ) अरे, ताम्बूलदक्षिणादीदं देयमस्मै । ( परिचारकस्तथा करोति । )

**विदूषकः**—अत्रागच्छति भगिनीदेवी । ( निष्क्रान्तः । )

( ततः प्रविशति महावसनालंकृता सुभद्रा कुसुमावल्या सह । )

**रुक्मिणी**—( सुभद्रामुपगम्य ) ननान्दृदेवि, महदिदं मे भागधेयं यन्मम संदेशानुसारमनुष्ठितस्नाना भवती समायाता । नो चेन्न स्नानं मे रोचते, कदाचिदनन्तरं कुर्यामिति त्वया संदिष्टे न किंचित्कर्तुं क्षमा ।

**सुभद्रा**—भ्रातृजाये, सर्वे मां वचनाचरणशस्त्रैर्विध्यन्ति तत्कथं त्वमपवादः । एवमस्तु । पाषाणादपि कठिनहृदयाऽहं संवृत्ताधुना ।

**रुक्मिणी**—( सुभद्राहस्तं गृहीत्वा ) इत आगम्यताम् । उपविशतु प्रथममत्रभवती । ( तां समीपमुपवेशयति । पृष्ठं हस्तेन परामृशति । मुखं निर्वर्ण्य ) केयं दशा दिवसद्वये । न भोजनं यथाकालं, नापि निद्रा । सदैव संतप्यसे । कथमेवं शरीरमनःस्वास्थ्यं स्यात् ।

**सुभद्रा**—अलमलम् । मत्कुशलपरामर्शैर्बहु श्रान्तासि ननु भ्रातृजाये । कृच्छ्रे निपतितया मया सार्धं न वचनद्वयमपि कर्तुं त्वयावसरो लब्धः । कुत्रासीत् तदाऽत्रभवती ।

**रुक्मिणी**—ननु ननान्दः । विवाहक्षण एव भवती विनष्टेति श्रुतवत्या मे यत् समापन्नं न तद्वर्ण्यम् । नासनादुत्थातुं समर्थासम् । न च शब्दोच्चारणे प्राभवम् । भयदकुविकल्पा मनसि प्रादुर्भूताः । किमुक्तेन बहुना । नेमं प्रसङ्गं वैरिण्यपि द्रष्टुमुत्सहे । एतावत्येव समये भवती पुनः स्वमन्दिरे

दृष्टेत्यपि वार्ता श्रुता। श्रुतमात्रायां तस्यां भवनमन्दिरं धावन्ती समुपागच्छम्। गर्गमुनिना तु पुनराज्ञापितं न पुरुषैरपि तत्र गन्तव्यम् । तव दास्य एव त्वत्समीपे तिष्ठन्तु। एकद्वदिवसानन्तरं प्रकृतिमापन्ना भवती द्रष्टव्याऽन्यैः। अत एव नाहं त्वां दृष्टवती।

सुभद्रा—ब्रवीतु किमपि भवती। न मयि पूर्ववत् स्निह्यसीत्येव मन्ये।

रुक्मिणी—कुत एतद्वदति भवती।

सुभद्रा—यद्यहं ते प्रियतरा स्यां तन्ममैतावति विडम्बने नेत्रयोश्चर्मपिधानमुपधाय न त्वं स्वस्था स्याः।

रुक्मिणी—ननान्दर्, यद्यहं सत्यं वदेयं त्वं कुपिता किल भविष्यसि। ब्रूहि मे का नामेयं भवत्या विडम्बना। स्वयमेव कारणं विना संतापं निर्मिमीषे।

सुभद्रा—यत्र मे घृणा तदेव भवद्भिर्बलान्मया कार्यते। नेयं नु विडम्बना!

रुक्मिणी—आम्। ज्ञातमधुना। देवरदेवेन प्रयासैर्दुर्योधनो वरो नियुक्तस्तत्कथं तेऽकल्याणम्। तत्सदृशो वरो न पृथ्वीतलेऽद्य लभ्येत। कियती राजसत्ता। कियदैश्वर्यम्। अथ च न किंचिदूनं सौन्दर्ये। किं बहुना। तव तस्याग्रमहिष्याः पुरतोऽस्माभिरपि प्रणम्यं भविष्यत्काले।

सुभद्रा—अलं वर्णनैः। पतिपत्न्यौ भवन्तौ समानमेव भाषेते। भवेदेव स दुर्योधन इन्द्रादपि भाग्यवत्तरः। यदि न मे तत्र स्पृहा किं मां तस्मायेव प्रदाय मम जीवनं मृत्तिकामयं कुरुथ।

रुक्मिणी—मा मैवं ब्रूयाः। न स्त्रीभिरेवं वक्तुं युज्यते।

सुभद्रा—शीतलं परदुःखं बन्धुपत्नि। यदि सत्यमहं निरूपये तदकारणप्रहारिणीं मां मन्येथाः।

रुक्मिणी—नैवम्। अनिर्बन्धं भाषणीयम्। कोऽत्र दोषः सत्यकथने।

सुभद्रा—साधु बन्धुजाये। तव भ्राता त्वां शिशुपालाय दातुकाम आसीत्। किं स शिशुपालो रूपेण पराक्रमेणैश्वर्येण वोन आसीद्यद्भवत्या रहसि

ब्राह्मणेन संदिश्य कृष्णो वृतः । सम्यगत्र प्रत्युक्ते त्वया, सर्वं भवदुक्तमनुमन्येय । ( प्रतिवाक्यमब्रुवत्यधोवदना तिष्ठति रुक्मिणी । तां करेण विधूय ) अहो भ्रातृपत्नि भट्टिनि, किंचिद् वद । उपदिश ।

**रुक्मिणी**—ननान्दर् । सम्यगाह भवती । भवन्मनोगतसिद्ध्यै न किंचित्कर्तुं शक्तेत्यहमेवमुक्तवत्यसहायतावचनम् ।

**सुभद्रा**—पश्य देवि । यदि त्वं सानुक्रोशं सनिर्बन्धं कृष्णाय कथयसि स सर्वं कर्तुं समर्थः ।

**रुक्मिणी**—न मन्तव्यं भवत्या, नाहं कथितवती तस्येति । प्रक्रान्तमात्रेऽस्मिन्विषये विस्फारितनेत्रं कुप्यति सः । तदाहं बिभेमि । किं करोमि ।

**सुभद्रा**—यथेच्छसि तथा कुरु । यदि मम जीवनं ते प्रियं तत्कथमपि श्रीकृष्णो वशीकर्तव्यो वचने बद्धव्यश्च । यदि च नेच्छस्येवं कर्तुमधुनैव कथय । मा वञ्चय मामाशाजाले निगृह्य ।

**रुक्मिणी**—( सुभद्रां संश्लिष्य ) देवि, ते दुःखं दृष्ट्वा हृदयं मे विदीर्यते । न तु किंचिद्दर्शितवती बाह्यतः । शान्तया त्वयेतो भवितव्यम् । यथाशक्ति सर्वं विधास्याम्येव ।

( सत्वरं विदूषकः प्रविशति । )

**विदूषकः**—भो देव्यौ, त्वर्यताम् । यतिमहाराजो भोजनासने निविष्टः । ज्येष्ठमहाराजेनाज्ञप्तं हस्तोदकं देव्या सुभद्रयैव वितीर्यमिति ।

**रुक्मिणी**—साधु । आगच्छ देवि । यतिमहाराजस्य दर्शनं क्रियताम् ।

( निष्क्रान्ताः सर्वे । )

॥ इति द्वितीयोऽङ्कः ॥

## अथ तृतीयोऽङ्कः ।

( आसनस्थौ कृष्णबलरामौ परिमितसेवकपरिवृतौ प्रविशतः । )

**बलरामः**—कृष्ण, अस्य महाविरक्तयतेर्दर्शनेन ममान्तःकरणं सर्वथाऽऽनन्द-पूर्णं ननु । ईदृशस्य यतेश्चिरंतनसहवासे प्राप्ते, प्रापञ्चिकानि दुःखानि पुरुषं न पीडयेयुः । बहवो योगिनो मयाऽवलोकिताः । अयं तु सर्वविलक्षण एव । पश्य—

( सरणिः–भूपाळी यथा )

**कृता योगिना क्रिया हि या यास्ताः सर्वा उचिताः**
**निष्कामत्वस्वाभाविकतागुणयुगनित्यान्विताः ॥**
**संभाषितहसितेषु तन्मतिर्विषयिजनैरनुमिता**
**सदैवावभासते परस्मिन् सद्रूपे निरता ॥**
**ब्रह्मानन्दे नित्यनिमग्नो देहे नावहितः**
**ब्रह्मामृतसागरवीचिभरे निरन्तरासक्तः ॥**

**कृष्णः**—कथमपि मन्यतामार्यः । तद्यतेर्विविधाश्चेष्टा न वास्तवतेजोदर्शिकाः ।

**बलरामः**—( रोषेण ) रे नास्तिक कृष्ण ! तं निर्मलं यतिमप्याशङ्कसे । विपरीत-तमा ननु ते मतिः ।

**कृष्णः**—आर्य, यदि मे वचनं ते क्रोधावहं तन्नाहं पुनरेवं वदेयम् । तस्याचरणाज्जनितमेव तु मन्मतं मयोच्चारितम् ।

**बलरामः**—किं तस्याचरणं विपरीतं दृष्टं त्वया । ब्रूहि ।

**कृष्णः**—कथं न विपरीतम् । नैवं क्वचनाप्याचाररीतिर्दृष्टा । अपि च आर्य, इदं त्वया मनसि कर्तव्यम् । तथा च सर्वं सम्यग्ज्ञातं भवेत् ।

( सरणिः-अस्तमान झाला, टाकुनि युद्ध राम आला )

सुतरां वीक्ष्य यतिः। सुभद्रामभवन्मूढमतिः ॥ धृ० ॥
गोमुखी कराच्चस्य विगलिता
आशीर्वचने रसना भ्रान्ता
नासाग्राद् दृष्टिः सा चलिता
लज्जाहीनकृतिः। तन्मुखदर्शनसौख्यरतिः ॥

**बलरामः**–( तिरस्कारेण ) अरे, कियदिदं कुत्सितकल्पनम्। अत एवेदृशा योगिनोऽस्मादृशानां निन्दकानां सहवासं परिहर्तुकामा गिरिकन्दरेषु निवसन्ति। रे कृष्ण, तस्य निरञ्जनपरमहंसस्य निन्दया स्वयं पापेषु मज्जसि, मां च मज्जयसि। अरे, एतावदपि पश्य। अद्य भोजने विविध-पक्वान्नानि कियन्ति सुरसान्यासन्। न तु तेषु तस्य रसः। न दृष्टं त्वया कथं स भुक्तवान्?

( साकी )

आज्ये लवणं निहितं दुग्धे जम्भफलं निष्पिष्टम्।
तक्रं क्वथितं क्षीरे क्षिप्तं सर्वमेव विपरीतम् ॥
किंचिद् भुक्तान्नः। तिष्ठति निविशति पुनः पुनः ॥

न प्राकृतसहजाश्चेष्टा इमाः। न तादृशामवधानमेवास्मिन्विषये। केवल-मस्मादृशानामुद्धारार्थं ते दृग्गोचरा भवन्ति। नान्यः कश्चिदत्र हेतुः।

**कृष्णः**–किमर्थं भोजने वैपरीत्यमिदमत्रेङ्गितं न जानाति भवान्। मयानुमितमेतत्।

**बलरामः**–अहाहा! बृहस्पतिः खलु भवान्। कथय कथय किमत्रेङ्गितम्।

**कृष्णः**–आर्य मा कुप्य। ममापरिपक्वधियो मतं कथये।

( सरणि :- जय जय वदना सुहास्यवदना )

भोजनसमये यतिना दृष्टा।
यदा सुभद्रा लावण्ययुता ॥
सस्मिता तच्चेतसो मूढता।
चेष्टा विविधा आचरिताः ॥ १ ॥
तत्रासीद्-यदि मदनुपस्थितिः।
ऋजुभावा भवदीया हि मतिः ॥
अकरिष्यद् विपरीतं स यतिः।
निःसंशयमेवं मन्ये ॥ २ ॥

**बलरामः**—जिह्वा ते दह्यताम्। पात्रापात्रविचारेऽसमर्थस्य पशुत्वेन संकीर्तन-मुचितं न मनुजत्वेन। बधिरस्य पुरतः संगीतिवद् व्यर्थं मयैतस्य मूर्खस्य पुरतः स महात्मा वर्णितः। (कृष्णं पृष्ठतः कृत्वोपविशति।)

**कृष्णः**—अरेरे, महत्कृच्छ्रमिदमापतितम्। भवेत्स यतिः सत्यो वा मिथ्या वा। विनोदिसंभाषणे कथमयं मनःपूर्वकः क्रोधः। तथैवास्तु। महत्तरस्ते-ऽनुभवः। अतस्तव मतमेव श्रेयः। अथ जातं सर्वं समीचीनम्।

**बलरामः**—(मुखमनिवर्त्य) अलमलमेतत्। यः साधुसज्जनानवमन्यते न तेन ज्येष्ठबन्धुसंमानोऽपि संभवति।

**कृष्णः**—नैवमार्य। स्वल्पकारणादेवं महान् रोषो न समुचितः। अनुचितं मयाचरितम्। यदि मया तवैष कोपोऽस्मिन्विषये ज्ञातपूर्वोऽभविष्यत्तन्न मया किंचिदपि भाषितमभविष्यत्।

**बलरामः**—(कृष्णाभिमुखः) कृष्ण, दीर्घो मे त्वदीयाचरणेऽनुभवः। बलादेव मम प्रतीपं निगद्य मां क्रोधाविष्टं करोषि। मयि च क्रुद्धे तुष्यसि। किमत्र गौरवं मन्यसे न जाने।

**कृष्णः**—आर्य, अलमधुना। जहाहि तं विषयम्। तव पीडां जनयित्वा दूये। पादयोरत्र पतामि। (तथा करोति।)

**बलरामः**—(सानन्दं स्वगतं) इयं विद्या धूर्तेनात्मसात् कृता किल। (प्रकाशं) मा, मा कृष्ण, एतत्। गतो मे कोपः।

**कृष्णः**—(सस्मितं स्वगतं) इदं मे भाषणं कस्मिंश्चनायति प्रसङ्गे मे बलवर्धकं भविष्यति।

**बलरामः**—कृष्ण, अस्मिन् यतिविषये किंचिन्मया मनसि कृतम्। यदधुना त्वयोक्तं तत्तवाभिप्रायं सूचयत्यत्र। तथापि न तेऽनिवेद्य कर्तुं समीचीन-मित्येव कथयामि।

**कृष्णः**—यत्र विचार्याचरणीयं तत्र युक्तमेवाहं वदिष्यामि। आज्ञापयतु भवान्।

**बलरामः**—इदं मे मनसि वर्तते।

( सरणिः - अभाग्याचे घरीं बाबा कामधेनु आली )

नेयो न निधिः स्वयं व्यर्थतां लब्धो दैवबलात्
सुखदयतिवरश्चतुरो मासान् निजगेहे वसतात् ॥
सत्संगतिरिह विना प्रयासैरस्माकं ससिता
दुर्लभवचनावलिर्गेहिनां स्यान्नः कर्णगता ॥
पातकपङ्क्तिर्गेहनतिमिरवद् रव्युदयेऽन्तरिता
यतेर्दर्शने नित्ये, जननं सार्थं नो भवतात् ॥

**कृष्णः** — उदारः कल्पः । न केवलमेकस्य, अपि तु सहस्राणां यतीनां प्रतिपालने समर्था वयम् । परंतु—

**बलरामः** — मा परंतुशब्दे विरम । यद्वदितव्यं तत्प्रस्तूयताम् ।

**कृष्णः** — न मे मतं भवद्विरुद्धम् । अपि त्वेतादृशानां निःस्पृहाणां, नास्मादृशानां प्रापञ्चिकानां गेहेषु सुव्यवस्थानम् । अतः समुद्रतीरस्थिते शोभने शिवमन्दिरे यतिः स्थापयितव्यः, सर्वा व्यवस्था सम्यक् च विधेया । ततः प्रतिदिनमेकदाऽनेकदा वा यथेष्टं दर्शनं कार्यमिति युक्तम् ।

**बलरामः** — मैवम् । सर्वकुटुम्बीया एवं न सदैव दर्शनं कर्तुं शक्ताः । निजगृहस्थितौ तु यतेर्यथाकालं नित्यदर्शनं सुलभं स्यात् ।

**कृष्णः** — अस्मत्प्रासादसमीपे पाठशालैकास्ति । तत्पश्चादुद्याने मन्दिरं शून्यमेव । यदि यतिस्तत्र स्थापितो न स दर्शनार्थं दूरस्थो दुर्लभो वा ।

**बलरामः** — हा । किमिदं स्थानं दर्शितम् । अरे, ईदृशं रत्नं निरन्तरं निजनेत्रदृश्यमेव युक्तम् । अथ मे मुख्यमुद्दिष्टं भिन्नमेव ।

**कृष्णः** — किं तदार्य ।

**बलरामः** — पश्य ! इयं सुभद्रा ममाज्ञानुवर्तिन्यासीत् । इदानीं तु सा दुर्घटस्वभावा । अतो यदि सेमं यतिं सेवेत तत्सुबुद्धिप्रादुर्भावात् तत्कल्याणकृते तस्या दुर्योधनेन सह विवाहमस्माभिर्निश्चितं सानन्दं सानुमन्येत । अतः स यतिस्तस्या अन्तर्गृह एव स्थापनीयो येन तस्यास्तत्सेवा सुकरा भवेत् ।

**कृष्णः**—साधु ! शोभनम् !! वरतरं ननु !!! आर्य, नैतदनुमन्ये लेशतोऽपि । सुभद्रामन्दिरे कथं यतिः स्थापनीयः । कथं कुम्भीलकः किल कोशाध्यक्षः क्रियते ।

**बलरामः**—(सत्वेषं) किं करोमि । तवेदं वचनं तप्ततैलमिव कर्णौ दहति । कथं तन्महायोग्यन्तःकरणं पापमयमनसा तुलयसि कुकल्पनाश्च कल्पयसे । धिक्त्वाम् ।

**कृष्णः**—क्षमस्व मेऽमर्यादाम् । यथाकालमनुक्तं प्रमादजनकमत एव ब्रवीमि । तरुणीसहवासेन कतिपयमहासमर्थतपस्विनां तपोयोगा विनष्टाः । न भवतः श्रुतिपथमागता एत इतिहासाः ।

**वसन्ते मेनकाभिदृष्टा ।**
**गाधिजमुनिना निजसुतपस्या विलयमहो नीता ॥**
**पराशर उन्मोहितचित्तः ।**
**नौकायां किल धीवरकन्यासंगोत्सवसक्तः ॥**
**वसिष्ठो महान् ब्रह्मनिष्ठः ।**
**स्नुषासक्तनिजमनसो नियमे नैषोऽपि च शक्तः ॥**

आर्य, महतामेतावतामियं दशा । एष यतिस्तु तरुणः । दम्भोऽपि महानेतस्य ।

(सरणिः—दक्ष वदे हा देव कशाचा)

**हेममहाक्षौमं साटोपं मूर्धनि बद्ध्वा रक्ताभं**
**नृत्यन् याति स नाश्यरतमतिर्वहन् रङ्गभूमौ दम्भम् ॥**
**अरुणमधोवसनं नादयुतं जपमालास्य करे प्रसभं**
**ध्यानधारणानिमग्नहृदयः प्रदर्शयति मे बहुदम्भम् ॥**
**सर्वाङ्गं ननु सावधानताभस्मचर्चनाकृतशोभं**
**रुद्राक्षमणीनां ता मालाः कण्ठकृता हि ससंरम्भम् ॥**
**स्फटिककुण्डलं गमनचालितं कर्णं कुरुते रुचिराभं**
**पादुके च 'खट्खट्'-नादयुते त्रिदण्डकरकृतशान्तसभम् ॥**

अत एव ब्रवीमि नानुमन्ये भवत्प्रस्तावम् ।

**बलरामः**—साधु ! कृष्ण साधु ! सुन्दरतरुणपुरुषाणां वैराग्यं न स्थिरमिति भवान्मन्यते । तथापि कथयामि । जगदिदं साध्वसाधुसत्यासत्यैः परिपूर्णमिव । न पुनः सुज्ञेन, साध्वसाधुना सत्यं चानृतेन तुल्येत । कथं त्वं मन्यसे न कोऽपि विषयेषु निरासक्त इति । शृणु—

(सरणिः—वा रे बिभिषण बोलत)

**येषां भेदः परिनष्टः । भयलेशोऽत्र नावशिष्टः ॥**
**रम्भा जगन्मोहिनी सा । विहिता शुकेन निजशिष्या ॥**
**निर्दहति तं पार्वतीशः । वशजगतमनङ्ग ह्येषः ॥**
**मारुतिरथ स कुमारेशः । न वशे करोति तौ योषा ॥**
**भीष्मः साक्षी गुरुः स्थितोऽयं प्रवया नोपरतः ।**
**भुवनत्रयेऽपि विख्यातः ॥**

तत्कृष्ण, एवं स्थितं सत्यं तव विपरीतमवभासते । अत्र हेतुं जानीषे ? यदि न कुप्यसि तत्कथयामि ।

**कृष्णः**—कथमेतदार्य । न भवद्वचनेन कदाप्यहं कुपितः । उच्यताम् ।

**बलरामः**—निजमनोनुरूपमेव सर्वस्य विश्वपरीक्षणम् । कनककान्ते तिरस्कुर्वन्तो जना जगति विद्यन्त इति कथिते चोरजारादयो नैव तन्मन्येरन् । एतावता जानीहि सर्वमिदम् ।

**कृष्णः**—वदतु भवान् किंचनापि । किं तु यतेर्निरन्तरसहवासे सुभद्रा स्थापयितव्येति नैतत्प्रशस्यम् । को व्यतिकरस्ततः संभवेन्नैतन्निरूपयितुं शक्नोमि ।

**बलरामः**—भवतु वा । नाहं मे निश्चयात्परावर्ते ।

**कृष्णः**—यथा मन्यते भवान् । मया कर्तव्यत्वेन यत्सूचयितव्यं तत्कृतम् । नातः परमहमपराध्यत्र ।

**बलरामः**—तथास्तु । गच्छाम्यहं निश्चितार्थसिध्द्यै । (उत्तिष्ठति ।)

**कृष्णः**—(उत्तिष्ठति । बलरामो निष्क्रामति । ततः सानन्दं स्वगतं) समीचीनमिदं संभूतम् । नातः परं यतेर्विषय आर्यस्याशङ्का स्यात् । अरे, अहं तु गङ्गाजलनिर्मलान्तःकरणे तस्मिन्कपटमाचरामि । (विमृश्य) न हि न

कृष्ण :— स्वल्पकारणादेवं महान् रोषो न समुचितः । अनुचितं मयाऽऽचरितम् ।

[ तृतीयोऽङ्कः । पृ० ४५

हि। नैषा वञ्चना। शुभोदर्कमादिकपटं न दोषावहम्। अद्य खलु सुखेन निद्रास्यामि। यतः–

( साकी )

आरब्धं यत्कार्यं हि मया सुष्ठु शोभते वृद्धम्।
चिन्ता विगता यतो युज्यते सर्वसिदं निर्विघ्नम्॥
अधुना न च भीतिः। प्रायः संपन्ना च कृतिः॥

किमपि विनोदनस्थानमिदानीं गन्तव्यम्। तत् किं सत्यभामामन्दिरमुत रुक्मिणीधाम। ( विमृश्य ) रुक्मिणीहर्म्यमेव गच्छामि। ( कतिचित् पदानि गत्वा ) न तत्राप्यद्य सौख्यलाभः। यतः–

( दिण्डी )

बहुदिनेषु न लोकिता सुन्दरी सा
क्रोधयुक्ता ननु ततो भवेदेषा।
प्रणयबाहुल्यं मया कारयेत्सा
दयां मयि च तदा विधास्यति सुहास्या॥

भवतु। तत्रैवाद्य यामि। ( नेपथ्याभिमुखं विलोक्य ) अरे, भाषमाणोऽहं तन्मन्दिरमेव प्राप्तः। साधु। लक्ष्मीविलासमन्दिरमित्यन्वर्थनामेदं मन्दिरम्। इदानीं सर्वमेवात्र व्याकुलीभूतम्। पश्यत–

( रागः – कालिंगडा, तालः – धुमाळी )

काश्चिन्निपुणं रचयन्त्येताः सुगन्धिसुन्दरकुसुमानि।
तैलपरिमलैर्वासयन्ति वा बहुविधशय्यावसनानि॥
ताम्बूलैः संबिभ्रति सगुणैर्विविधमनोहरपात्राणि।
अनुमञ्चकरक्षितानि सर्वाण्यङ्गरागविनिधानानि॥
वातायनजवनिकाः कुर्वते शीताः सिक्तान्युदकानि।
जातिवासितैः सलिलसिञ्चनैः सौधपदानि च सुखदानि॥
सर्वसिद्धताप्रवीणपरिजनधृतसेवाव्रतहृदयानि।
वैकुण्ठसमं मन्दिरमेतद् दृश्यन्ते न न्यूनानि॥

( सम्यङ् निरीक्ष्य ) कतिचिद् दास्यो मत्प्रियाप्रीणनपरा वीणातन्त्रीमृदङ्गादि-वादनमग्ना गायन्ति। तन्न सहसा मे मन्दिरप्रवेशो युक्तः। सर्वमिदं शृण्वञ्छनैः प्रविशामि। ( इति निष्क्रान्तः। )

( ततः प्रविशति मञ्चकस्था रुक्मिणी । परित उपर्युक्तगानम् । )

**रुक्मिणी** –( कियन्तंचित्कालं गानश्रवणेन यापयित्वा ) अयि कोकिले, सर्वानितो विश्रामय । नाद्य मे प्रकृतिस्वास्थ्यम् । सुप्तायां मयि प्रावरणं निधाय स्वस्थाने निद्रातुमर्हसि । (शय्यायां स्वपिति । कोकिला प्रावरणमास्तरति ।)

**कोकिला** – ( सर्वान् प्रति ) नारीजन, देवी निद्राभिभूताऽद्य । तत्सर्वमिदं यथास्थानं स्थापयित्वा गेहं गम्यताम् । ( यान्ति सर्वाः । रुक्मिणीमञ्चकमुपसृत्य प्रेक्ष्य च ) कथं सत्वरं निद्रयाऽभिभूताद्य देवी । साधु । अहमपि स्वस्थानं गच्छामि । ( कतिचित् पदानि गत्वा ) अये, महाराज इत एवागच्छति । किं करोमि । देव्याः प्रबोधनमपि निष्करुणम् । अन्यथापि दुष्करम् । ( पुनर्मञ्चकमुपेत्य ) देवि ! देवि ! नैषा प्रबोधति । किं कुर्याम् ।

( ततः प्रविशति कृष्णः । )

**कृष्णः** –( दासीं प्रति ) हञ्जे, किं वर्तते ।

**कोकिला** –( अञ्जलिं बद्ध्वा ) न किंचित् । ननु निद्राति भट्टिनी ।

**कृष्णः** – किं क्षिप्रपदा निद्राद्य । गतनिशा निर्निद्रासीन्ननु ।

**कोकिला** – बहूनि दिनानि महाराजो नात्रागतः । अतः प्रतिरात्रि जागर एव ।

**कृष्णः** –( स्वगतं ) प्रस्तुतो दास्याऽऽगामिक्रोधवर्षः । ( प्रकाशं ) ममागमनमावेद्य मन्दं प्रबोधय ।

**कोकिला** –( पुनर्मञ्चकमुपसृत्य ) भट्टिनि, भट्टिनि, आगतो महाराजः । उत्थीयताम् ।

**रुक्मिणी** –( सहसोत्थायोपविश्य भ्रुकुटिभङ्गं च कृत्वा ) कोऽयं ते तापः । नेदानीं निद्रां लभे । साऽद्य किंचिदापन्ना । न तत् सोढं त्वया नु ।

**कोकिला** – देवि । ( कृष्णमङ्गुल्या निर्दिशति । )

**रुक्मिणी** – ( कृष्णं दृष्ट्वा, किंचिल्लज्जमाना पर्यङ्कादवतीर्य ) कोकिले, नातो मे निद्राऽत्र प्रसीदेत् । निःस्तब्धेऽत्र पवने, ऊष्मणः संतापं सोढुमक्षमा । तज्जलमन्दिरमार्गमादेशय । तत्र कदाचित् प्रसन्ना स्यान्निद्रादेवी ।

**कृष्णः**—एवमेव। तत्रैव गच्छामः। अस्मिन् निदाघे नेदं स्थानं सुखावहम्। तथाऽधुना—

(मल्हाररागः, त्रितालः)

**नभ इह मेघैराक्रान्तम्।**
**तारामण्डलमखिलं चान्तरितम्॥ ध्रु०॥**
**कडकडकडिति च निर्घोषवती**
**लखचकास्ति सौदामिनी**
**विफलयोजना वृष्टिसती**
**विरहिजनानां मन आकुलितम्॥**

**रुक्मिणी**—(किंचित् तिर्यग्दृष्टिपातं निक्षिप्य) अत एव विरहिजनसान्त्वनाय तत्रैव गन्तव्यम्। केन निमन्त्रितोऽत्र मे निद्राभङ्गाय। (कोकिला निष्क्रान्ता।)

**कृष्णः**—प्रिये, न तव रोषार्हं मया त्वय्याचरितम्। परं तु विघ्नविशेषैस्तवालिङ्गनसौख्यमन्तरितम्। अतः—

(सरणिः—'बिढोरंगा ह्वरळू' इति कर्नाटकीया)

**न च सुन्दरि मयि कोपं कुरु करुणासंकल्पम्॥**
**रोषात्ते तनुरेषा लभतेऽतनुकम्पम्॥ ध्रु०॥**
**बहुगणिता मे प्रमदाः। प्रीतिस्त्वयि सखि सुखदा॥**
**भवतीदं ज्ञातवती। तदियं सखि किं रीतिः॥**
**क्वापि भवेन्मे वसतिः। ननु हृदये तव मूर्तिः॥**
**प्रेमा यो मयि सक्तो मा कुरु तल्लोपम्॥ १॥**

**रुक्मिणी**—(स्वगतं) किं कुर्याम्। मोहिनीजालेऽस्मिन्प्रसारिते न किमपि वक्तुं क्षमा। (प्रकाशं) एवं मधुमधुरवचनैर्नैकवारं वञ्चितासि। अद्य तु विना दण्डं न मे रोषोऽपेयात्।

**कृष्णः**—(सस्मितं) प्रिये, तत्को विलम्बो दण्डने। सर्वं त्वदधीनमेव। पश्य।

(उपर्युक्ता सरणिः।)

**करपाशे संयमनम्। वितर तथा तनुदमनम्॥**
**आकृष्य च कचवृन्दम्। अधरे कुरु दन्तपदम्॥**
**कुचभल्लातङ्कमिमम्। प्रहरोरसि मम परमम्॥**
**अपराधे ह्येतन्मे दण्डनमनुरूपम्॥ २॥**

( इति तां समालिङ्गति । )

**रुक्मिणी**—( सलज्जं ) किमत्रोच्यते ननु । ( कृष्णेन सह मञ्चके निविशति । )

**कृष्णः**—प्रिये, अकारणरोषान् निजपरपीडायां कुतः सौख्यम् । कतिचिद्दिनानि विवाहव्यतिकरे, कतिचिच्च सुभद्राप्रकृतिस्वास्थ्यव्यवस्थायां निर्गतानि । नाहं तेषु क्वचिदपि गन्तुमशक्नुवम् ।

**रुक्मिणी**—दृष्टं मया, कियांस्ते विवाहविषये व्यापारः प्रकृतिस्वास्थ्ये वा चिन्ता । भवतु । सम्यक् प्रस्तुतो विषयः । अत्र मया किंचिद्वक्तव्यमस्ति । यद्यदहं पृच्छामि तत्तत्प्रसन्नमनसाऽनिर्बन्धं भवता कथनीयम् ।

**कृष्णः**—वर्जयावस्तं विषयमेव । बहु व्यतीता विभावरी ।

**रुक्मिणी**—व्यतीयादियं रजनी । मा ते तत्र चिन्ता ।

**कृष्णः**—भवतु । पृच्छतु तावद् भवती ।

**रुक्मिणी**—पश्य । ननान्दुर्विवाहविषये महानयं व्यतिकरः संजातः । न तु भवांस्तत्रावदधाति । कथमेतत्परिणंस्यति ।

**कृष्णः**—कोऽत्र परिणामः कीदृशो वा व्यतिकरः । चतुर्मासावसाने विवाहो निश्चितः खलु ।

**रुक्मिणी**—भवता निश्चितः, न तु तस्याः संमतः ।

**कृष्णः**—कुतो नो विमर्शेनात्र प्रयोजनम् । आर्यो गुरुः । सर्वव्यवहारं स एवात्मना व्यवस्थापयति । अतः साधु-असाधु-विवेके स एव प्रमाणम् । तथापि मयैकदास्मिन्विषये किंचित्प्रस्तुतम् । तदा स्पष्टमेव तेनोक्तं 'न तवात्र किंचित्कर्तव्यं, यथेष्टं कर्तुं प्रभुरहं' इति । ज्ञातम् ? किं मत्कर्तव्यमितोऽवशिष्टम् ।

**रुक्मिणी**—मैवम् । देवरदेवः प्रथमत एव कौरवपक्षपाती । अतस्तैः संबन्धस्तेन बहुमतो ननु । या तु तस्मिन् कुले वधूत्वेन प्रदेया कथं न तस्या अनुमतिरपेक्ष्यते । न सा बालिकेदानीम् । निजशुभाशुभज्ञाने समर्था सा ।

तत्किमेवं क्रियते। न च भवतः पञ्च वा दश वा भगिन्यः। कनकमतिशायिन्येकैव भवतः स्वसा। एवंगतायां तस्यां किमनेनैश्वर्येणाधिकारेण प्राज्ञत्वेन वा। आमरणान्तो विवाहग्रन्थिः। सम्यग्विमृश्यैव स बन्धनीयः। यदि देवरदेवः स्वाग्रहं न मुञ्चति, यदि च भवानुदासीनः, तया च यदि देहदण्डे प्रयतितं, तदाऽपकीर्तिर्न केवलं देवरदेवस्य। (कृष्णस्य मुखं वीक्ष्य) नन्ववहितोऽसि?

**कृष्णः**—(क्रोधमभिनीय) अलमलम्। सम्यग्ज्ञातं सर्वं मया। मम चार्यस्य च कलहमभिमन्यसे। स्वतन्त्रं च निवस्तुमीहसे। प्रपञ्चे बन्धुकलहबीजं स्त्री किल। नात्र संशयः। रुक्मिणि, अस्मिन्नेव विषये यदि ते पुनर्वचनविन्यासस्तन्न क्षणमात्रमप्यहमत्र तिष्ठेयमिति शपथेन ब्रवीमि।

**रुक्मिणी**—(रोषेण मञ्चकादवतीर्य दूरं तिष्ठन्ती) चिराय त्वां जानामि। अतश्छलोऽयं ते संविज्ञातः। नास्मात् क्रोधाद् भीताहम्। चतुर्थसमयोऽयम्। यदा यदैतं विषयं प्रस्तौमि केनचिन्निमिषेणैवमेव निःसृतोऽसि। या ललनाधमा भ्रातॄणां भ्रातृभिर्वैरं संपादयन्ति न ताभिर्मे प्रयोजनम्। न ता ममोपमानभूता इति स्पष्टं वदामि। (क्रोधाविष्टा निःश्वसन्ती चैकतस्तिष्ठति।)

**कृष्णः**—(सानन्दं स्वगतं) साधु! सत्यं साधु! कियद्रमणीयेयमस्या मुखश्रीः। (प्रकाशं)

(सरणिः – कर्नाटकीया——आसखिय भयदिवेदरव्याडो)

अपि कोपवती मे सुखदा प्रियतमा स्थिता।<br>
वक्रता हि भ्रूकुटिगता। अरुणता कपोलवृता॥<br>
तनुलतापि कम्पयुता। वदनेन्दौ खेदाक्रान्ता॥ ध्रु०॥<br>
किं कनकमूर्तिरनलेषु नु परमतापिता।<br>
अथ विद्युदियं गगनतो नु भूमिमुपगता।<br>
ज्वाला नु पावकस्येयं वेद्यां ज्वलिता।<br>
पदधानं चञ्चलितम्। हृदयं पूर्णं रिक्तम्॥<br>
अधरपदं किं स्फुटितम्। विध्यन्ति च मृदु तद् दन्ताः॥ १॥

किमेतत् प्रिये। विनोदवचने स्वैरस्खलिते नैष रोषः समुचितः।

**रुक्मिणी**—(तत्स्थानादेव) कोऽयं प्राणहारी परिहासविनोदः। आम्। ज्ञातम्। इतो निर्गन्तुं निमित्तमपेक्षमाण इमं कलहमारभते भवान्।

**कृष्णः**—मैवं मंस्था विपरीतम्। इतो गच्छेति त्वयादिष्टोऽपि नाहं गमिष्यामीति जानीहि। उपविशतु भवती स्वासने।

**रुक्मिणी**—कस्त्वर्थः। मैवम्। अप्रियं यन्मे वचनं तत् किं वृथा जल्पेयम्।

**कृष्णः**—यथेष्टं सर्वं ते कथयामि। कोपं विसृज्येत उपविश्यताम्।

**रुक्मिणी**—(आगत्योपविश्य च) न मे रोषो यदि भवानृजु मन्त्रयते।

**कृष्णः**—आज्ञापय यत्त्वयेष्यते।

**रुक्मिणी**—ननान्दार्जुनं वरितुं वाञ्छति। भवानेव तस्या आशाकारणम्। तदर्जुनमन्विष्य सुभद्राया मनोरथान् सफलीकर्तुमर्हति भवान्। अवश्यं ह्येतत् करणीयम्।

**कृष्णः**—(विमृश्य) तत्रैव मे यत्नः। प्रायेण सा मनोगतं लभेतैव। इदं ननु ते पर्याप्तम्।

**रुक्मिणी**—नैषाशीः संदिग्धा मे समाधानाय। सत्यमेव भवतस्तत्र यत्नः प्रसरतीत्यत्र मे विश्वास उत्पाद्यः। ततो मे मनः प्रसीदेत्।

**कृष्णः**—(स्वगतं) किमत्र विधेयम्। महानयं विघ्नः समुपस्थितः। कथितं वाऽकथितं वोभयमपि दुर्घटम्।

**रुक्मिणी**—किं चिन्त्यते। वञ्चकवचनं मृग्यते नु।

**कृष्णः**—(पुनः स्वगतं) रहस्यमस्यै निवेदयामि। प्रसंगे कार्यसाधिका भवेदियम्। (प्रकाशं) प्रिये, सर्वं तेऽधुना कथयामि। रहस्यं तत् सर्वथा गोपनीयम्। यदि स्त्रीस्वभावमनुसृत्य कस्मै स्फुटं वदिष्यसि तदावमानः कार्यनाशश्च।

**रुक्मिणी**—प्राणनाथ, चिराय जानासि माम्। नार्हसि प्राकृतनारीभिर्मां तुलयित्वा शङ्कितुम्। नैतत्त्वयि युज्यते।

**कृष्णः**—( हनूं स्पृष्ट्वा ) न खल्वेवं प्रिये । किंत्वतिरहस्यमेतत् । तस्य सम्यग्गोपनार्थमेवैवं वक्तव्यमस्मिन्मया ।

**रुक्मिणी**—तत्कुतो विलम्बः । उच्यतामिदं तन्महारहस्यम् ।

**कृष्णः**—कर्णमितः कुरु, कर्णे कथयामि । ( तथा करोति । )

**रुक्मिणी**—( आश्चर्यमभिनीय ) न हि न हि । नैतत्सत्यम् । कथमेवं संभवेत् ।

**कृष्णः**—नालीकम् । स एवैषः । सम्यङ् निरीक्ष्य त्वमपि प्रत्यभिज्ञास्यसि ।

**रुक्मिणी**—भवतु सत्यम् । कथं तु स परिणयेत् पुनः ।

**कृष्णः**—( पुनः कर्णे कथयति । ) ज्ञातम् ?

**रुक्मिणी**—( सानन्दं समालिङ्गय ) महाराज, निखिला मे चिन्ता विनष्टा । कथमहमेतज्जानीयाम् । व्यर्थं दुरुक्तोसि मया । क्षन्तुमर्हसि माम् ।

**कृष्णः**—( आकर्ण्य ) अयि प्रभातम् । संभाषणविषये कथं रात्रिरेव व्यरंसीन्न विदितं ननु । अयं प्रभातमंगलवाद्यध्वनिः श्रूयते ।

**रुक्मिणी**—( आकर्ण्य ) अविधा, सत्यमेव । अनुजानीहि माम् । स्नातया मया श्वश्रूश्वशुरदर्शनाय गन्तव्यमितः ।

**कृष्णः**—तथास्तु । ( रुक्मिण्या सहोत्थाय ) अहाहा ! कथं रमणीयता सर्वत्र ।

( रागः—भूपाळी; तालः—दादरा )

**प्रिये इयं, यामिन्याः समयलयेऽभ्युदयमुषा आहरेत् ॥ ध्रु० ॥**

**वहति शीतलो वाता[1] दीपविभा मन्दस्रुता**
**दिग्वदने निर्मलतां, अरुणमहो वितरेत् ॥ १ ॥**
**विहगरवाः श्रुतिमधुराः गुंजारविणो भ्रमराः ।**
**द्रुमा विरलपर्णपराः नलिनश्रीः प्रसरेत् ॥ २ ॥**
**सुखदुःखे जगतीयं विस्मरति च याति लयम् ।**
**सेवितुं हि निजभावं पुनस्तथा संसरेत् ॥ ३ ॥**

( इति निष्क्रान्तौ । )

**॥ इति तृतीयोऽङ्कः ॥**

१ वातृशब्दस्य प्रथमैकवचनम् ।

# अथ चतुर्थोऽङ्कः ।

( दास्यौ सारङ्गनयना कुसुमावती च पुष्पकरण्डकहस्ते ससंभ्रमं प्रविशतः । )

**सारङ्गनयना**—सखि कुसुमावति, अयं यतिराजः कियन्तं कालमतोऽप्यत्र निवत्स्यति । यदि स कतिचिद्दिनानि निवसेत् तन्नाहं जीवनधारणे शक्ष्यामि ।

**कुसुमावती**—हला । कुत एतावदुद्विग्ना । सारङ्गनयने, यदि तवेदं वचनं देव्याः कर्णपथमियान्न जाने किं स्यात् ।

**सारङ्गनयना**—नान्येन सहाहमेवं मन्त्रयिष्ये । मम ज्येष्ठभगिनीसमा त्वमतस्त्वया सह सुखदुःखकथाः करणीयाः ।

**कुसुमावती**—अयि चण्डालकन्यके, यतावत्र कतिचिद्दिनानि निवसति किं ते छिन्नम् ।

**सारङ्गनयना**—कथं कथ्यते । देवी त्वादित एव मयि रुष्टा । अधुना सा तं स्वच्छन्दयतिमेकनिष्ठं सेवते । ततो न रात्रौ निद्रा, न वाऽवधिर्यथेष्टभोजनस्य । सन्ततप्रतीहारित्वेन मृतप्रायाहम् ।

**कुसुमावती**—अयि, अस्माकं जीवनं सेवार्थमेव । तत्कुतः खेदः श्रमेषु । ( नेपथ्याभिमुखं दृष्ट्वा ) पश्य, देवी च रुक्मिणीदेवी चेत एवागच्छतः । निजजिह्वां सम्यङ् नियम्य तिष्ठ ।

( ततः प्रविशति सुभद्रा । )

**सुभद्रा**—( स्वगतं )

( रागः – जिल्हा, तालः – धुमाळी )

( सरणिः – आवडली हरिला )

यतिसहवासः किंचिद्वितरति मयि सौख्यदम् ।
संजनयत्येकान्तः परमभयं दुःखदम् ॥
मरणस्य चतुर्मासविगमने नन्वेष्यत्यधुना दिवसः ।
चिन्तयानया रजनी निखिला निर्निद्रं शयने विगता ।
मनो मे दीर्यते न्विदम् ॥

( प्रकाशं, दासीं प्रति ) पुष्पाणि गृहीत्वा युवामत्रैव तिष्ठतः । कुत एतत् कार्यशैथिल्यम् । कुसुमावति, त्वमप्यस्याः साहचर्येण दूषिता ननु ।

**कुसुमावती**—( अञ्जलिं बद्ध्वा ) देवि, नातीतः कालः । यतिराजः स्नात्वा ध्याननिमग्नः । अस्मिन् समये न केनचन तत्र गन्तव्यमित्याज्ञापिते आवामत्र तिष्ठावः ।

**सुभद्रा**—शोभनम् । गत्वा तत्र सर्वसिद्धतां कुरुतम् । तस्य समाधिविलये कयाचिदेकतरयाहं वेदितव्या ।

**उभे**—यथाज्ञापयति देवी । ( इति निष्क्रान्ते । )

**रुक्मिणी**—( प्रविश्य, सुभद्राहस्तं गृहीत्वा च ) ननान्दर्, इदानीं न त्वमवसरं लभसे । कतिचिद्दिनानि त्वां द्रष्टुं यतित्वाऽद्य तत्सिद्धम् । मया सह निभृतसंभाषणायास्ति ते कोऽप्यवसरः ?

**सुभद्रा**—सत्यमाह देवी । मया सर्वकालं यतिसंनिधौ भवितव्यम् । क्षणमात्रमपि मामदृष्टवतस्तस्य कोपः ।

**रुक्मिणी**—आम् । इयान् स त्वयि मुग्धः । अपि तु ननान्दर्, रक्ष विनयम् ।

**सुभद्रा**—इश्श् । कथमभद्रं मन्त्रयसे । मां वर्जयित्वाऽन्या कापि संनिहिता न तन्मनोनुकारिणी वर्ततेऽतः स कुप्यति । लेशमात्रेऽपि त्वं छिद्राण्यन्विष्यसि । यतिमपि तं परिहसितुं न विशङ्कसे ।

**रुक्मिणी** – भवतु तत् । प्रमोदो मे, यद् यतेरागमनात् ते प्रकृतिः प्रायेण स्वस्था । प्रसीदत्वीश्वरः कथमपि च । यतेर्हि चिन्तामोक्षं लभेथाः ।

**सुभद्रा** – बन्धुजाये, यत्त्वया मे प्रतिश्रुतं तत्कथं वर्तते । कथय ।

**रुक्मिणी** – पश्य ननान्दर् । गते चतुर्दिवसे सततमेतदेव तं पृच्छामि । न तु स ऋजु भाषते । किमपि वक्रोत्तरं कुरुते । नोपायं पश्यामि । वद किमत्र करवै ।

**सुभद्रा** – ( सवाष्पं खिन्नमुखी ) अनाथोऽयमबलाजनः । अस्य विनाशो भवतोरुभयोः कल्याणायैव भवतु ।

( रागः – जिल्हा, तालः – धुमाळी )

( सरणिः – अजि अक्रुर हा नेतो श्रीकृष्णाला )

**अयि बहुलाशा देवि मयासीद्विहिता । यद्विना पतिमहं दलिता ॥**
**मम कार्यं तं योजयिष्यसे कृष्णम् । आशा सा विफला नूनम् ॥**
**त्वं कथं निर्दयैषैवं**
**विपरीतं जातं दैवं**
**मम यात्रेयं जगति निष्फला जाता । पीडिता वृथा किल माता ॥**

**रुक्मिणी** – ननान्दर् । कथमेवं विपरीतं वदसि । कथं तेऽकल्याणे नः स्पृहा स्यात् । अहं ते कथयामि यं त्वं सेवसे स एव ते मनोरथान् पूरयेत् ।

**सुभद्रा** – भवेन्ननु मे किमपि । सर्वे यूयं परीक्षिताः । अहमपि कथयामि यतिराजसेवैव कदाचिन्ममोपकारिणी भवेत् ।

**रुक्मिणी** – एतद्धि सत्यं ननान्दर् । अपरं च कथयामि । यदा स यतिः प्रसन्नो भवेत् तदा त्वयोच्यतां 'अर्जुनेन संगमः साध्यः । न चेद् भवतैव मां स्वीकृत्य मया सह निर्गमनं कर्तव्यं' इति ।

**सुभद्रा** – ( रोषेण नेत्रे विस्फार्य ) कथं निस्त्रपा ते जिह्वा । त्वां बन्धुपत्नीति वदन्त्यपि लज्जेऽहम् । गच्छेदानीम् । ज्ञातस्ते मतिविभवः । अतःपरं मा त्वया सह संभाषणप्रसंगोऽस्तु मे । ( गन्तुं प्रस्थिता )

**रुक्मिणी** – ननान्दर् मा कुप्य । शृणु तावदशेषतो मे वचनम् । ( किंचिदप्यनुक्त्वा सुभद्रा निष्क्रान्ता । ) ( स्वगतं ) मम वचनं परमाप्रियमिदानीं मन्यते । तदेव मधुवचनं भविष्यति । अधुना तावत् स यतिराजो द्रष्टव्यः । कियदिदमाश्चर्यम् । यदा प्रथमदिवसे स मया दृष्टस्तदा महातपस्वी मतः । कथं रहस्यमिदं केनापि ज्ञायेत । कदेमं पश्यामीत्युत्कण्ठितं चेतः । ( नेपथ्याभिमुखं दृष्ट्वा ) हला, स्वामिमहाराज आसनस्थोऽत्र । यथावसरं दर्शनं कर्तव्यम् । ( निष्क्रान्ता । )

( ततः प्रविशति यतिवेषधर आसनस्थोऽर्जुनः । )

**अर्जुनः** – हरे नारायण नारायण ! कियद् विलक्षणं मे दैवविलसितम् । सर्वं स्वप्नवद् घटते । पश्य–

( रागः – झिंजोटी; तालः – धुमाळी )

**दृष्टा पुनरपि ततो निगूढा प्रिया सुभद्रा घोरवने ।**
**अत्र सुन्दरी कुतो न्वागता नाद्यापीदं किल जाने ॥**
**मदीयवेषं सत्यं मत्वा हलधरोऽपि निरतो भजने ।**
**अपि गर्गमुनिस्त्रिकालवेत्ता कथं विमूढो न च जाने ॥**
**कपटनिपुणमतिकृष्णसखाऽयं कथं विश्वसेदत्र जने ।**
**सर्वमिदं पुनरवधार्य मनो मग्नं ननु संमोहघने ॥**

अस्तु । मायाकर्तृत्वं विचारयन्पुरुषो व्याकुलीभवति तथैवाहं पर्याकुलः । नात्र पुनश्चिन्ता युक्ता । आगतो दिवसो यापनीयः । भवतु तस्य कोऽपि परिणामः । एकतः परमसुखावहा मे दशेयम् ।

( सरणिः – सदाशिवधुंदी )

**प्रिया मृगनयना ।**
**अनुदिनं ममाज्ञापरा सेविते निपुणा ॥**
**तुच्छमतः सुखमिन्द्रादीनां**
**यदि ते ह्यमृतरसान्नाः ॥**

अथवा तन्मनोहररूपं यदि संनिधौ वसति तथापि मनोवाञ्छितमाचरणं प्रतिषिद्धम् । अतः क्वचिदेवं कृच्छ्रमापतति तत्किं कथनीयम् ।–

( सरणिः – अञ्जनीगीतस्य )

**अनलसंनिधौ नवनीतस्य । चुम्बकपार्श्वे वा लोहस्य ॥**
**षड्रसभोज्ये क्षुधातुरस्य । या सा मेऽवस्था ॥**

भवतु कथंचन । यदि तु सा सुन्दरी क्षणमात्रमपि न संनिहिता तदिमे प्राणाः पञ्चत्वमाप्तुं यतन्ते । भवतु । नित्यनियमानुसारमेतत्पत्रपठनं तद्र-त्नमालया तन्मङ्गलनामसहस्रजपश्च समाप्ते । अधुना तन्मनोहररूपं ध्यात्वा मानसपूजां निर्वर्तये । तत आह्निकसमाप्तिः स्यात् । ( कियन्तमवसरं ध्याने स्थित्वा ) अहाहा ! सुन्दरि, तव नखशिखान्ता मूर्तिरस्मिन् हृदयकमलेऽव-भासते । आनन्दवर्धिके देवि, तव पूजां विधास्यामि । सा ते समर्प्यते ।

**समर्पयेयं नीरक्षीरालिङ्गनरूपं ते स्नानं**
**प्रावृणोतु ते तनुं कोमलां सदा मदालोकनवसनम् ॥**
**ललाटदेशे त्वत्प्रेम्णोऽरुणकुङ्कुमतिलकस्याधानं**
**तनुलतिकायौवनपुष्पाणां त्वत्कण्ठे मालाग्रथनम् ॥**
**चिन्तनेषु तव दीर्घश्वसितं समर्जयेद् धूपस्थानं**
**दहेद्वपुःकर्पूरमनङ्गस्तेन भवेत्ते सभाजनम् ॥**
**नैवेद्यार्थं विनिधेहि पुनर्ममाधरं सखि, उपवदनं**
**हरिभगिनि क्षन्तव्यमिदं मे प्रिये कृतं कपटाचरणम् ॥**

अरे, मम नेत्रोत्साहदात्री सा प्रिया कथं नाद्याप्यागच्छति । युक्तमेव । मयैव वेषानुरूपो नियमो विहितो यन्मम प्रातःस्नानानन्तरं प्रहरैक-पर्यन्तं न केनापि ममान्तिकमागन्तव्यमिति । तमनुरुध्यमाना मम प्रिया समीपमेव क्वचिद् भवेत् । तदत्राऽऽगन्तुं तस्याः संज्ञा कर्तव्या । ( उच्चैः 'नारायण नारायण' इत्युच्चरति । )

( ततः प्रविशति त्वरमाणा दासी कुसुमावती । )

**कुसुमावती**—( प्रणम्य ) किमिष्यते महाराज ।

**अर्जुनः**—( सामर्षं ) हुं, दूरे तिष्ठ । दास्याःपुत्रि कुत इदमौद्धत्यम् । किं न पश्यसि मां महावस्त्रधरम् ।

( अत्रान्तरे प्रविशति दासी सारंगनयना । )

**सारङ्गनयना**—( कुसुमावतीं प्रति ) कुतोऽयमस्येयान् क्षोभः ।

**कुसुमावती**—( सारङ्गनयनामुपेत्य ) अयि भागधेयमिदं मे । यदा देवी सुभद्राऽसंनिहिता तदैवमेवास्योपप्लवः ।

**सारङ्गनयना**—सत्यमिदानीं नौ कुग्रहयोगः । नष्टेऽस्मिन्, सुयोगः स्यात् ।

**कुसुमावती**—अयि चाण्डालि, मन्दं मन्त्रयस्व । यदि स आकर्णयति तद्देव्यै नूनं निवेदयिष्यति ।

**अर्जुनः**—( किं करोति सुभद्रेति प्रष्टुं करनिर्देशं करोति ) नारायण नारायण ?

**सारङ्गनयना**—दग्धा[1] वयम् । सर्वमेवास्य नारायणः । किं ज्ञातव्यमत्र ।

**अर्जुनः**—( पुनः कोपेन तथैव करसंकेतं निर्दिश्य ) नारायण नारायण ?

**कुसुमावती**—( उपसृत्य ) महाराज, मुग्धे दास्यावावाम् । न जानीवः किंचनैभिः संकेतचिह्नैः । यद्रोचते तद्विशदं कथ्यताम् ।

**अर्जुनः**—( रोषेण ) उभे अपीतो निष्क्रामतम् । न भवत्योः सेवाग्रहणार्थमत्रोषितं मया । नारायण नारायण ।

**कुसुमावती**—आम् । ज्ञातमिदानीम् । सुभद्रादेवीसांनिध्यमीहते । ( यतिं प्रति ) महाराज, देवी सपद्येष्यति । यदि वाञ्छितं, तत्सत्वरमागमनार्थं तस्याः प्रेषयामि सन्देशम् ।

**अर्जुनः**—( मूर्धानं विधूय ) नारायण नारायण ।

**कुसुमावती**—अयि सारंगनयने, गच्छ शीघ्रं देवीं चात्रानय ।

**सारङ्गनयना**—एवमेव । ( निष्क्रान्ता । )

**अर्जुनः**—( स्वगतं ) आगच्छतु सा सुन्दरी सन्देशेनानेन । नो चेद् रोषावेशे विपरीतशब्दोच्चारणाद्रहस्यभेदो भवेदिति शङ्कते मे मनः । ( नेपथ्याभिमुखमाकर्ण्य ) पदरवोऽयं श्रूयते तदसंशयं मम प्रिया ह्यागच्छति । विलम्बेन तापितोऽहमद्य तया । अतोऽहमपि कोपमभिनीय भाषणवर्जं तिष्ठामि । ( तथोपविशति । )

---

१ हताशत्वोद्गारः ।

( ततः प्रविशति रुक्मिणी । )

**रुक्मिणी**—( ससंभ्रममेत्य कुसुमावतीं प्रति ) अयि कुसुमावति, कथं त्वं करौ संयुज्यात्र तिष्ठसि । न जानासि ननु प्रासादगतं संभ्रमम् ?

**कुसुमावती**—सत्यमाह देवी । आप्रातःकालादहमत्रैव स्थिता ।

**अर्जुनः**—( रुक्मिणीं दृष्ट्वा सभयं ) किमिदं कृच्छ्रम् । सूर्यातपतप्तो जनो नभसि मेघावलिं वीक्ष्य, वृष्टिरधुनात्मानं शमयेदित्यवेक्षमाणः, यथाग्निवृष्टिं लभेत तद्वन्मेऽवस्थाऽस्या आगमनेन । भवतु । मया सावधानेन वर्तितव्यम् ।

**रुक्मिणी**—अये, ननान्दुर्विवाहदिवसो निश्चितः । अद्यैव विवाहपूर्वदेव-कार्यभोजनादि निर्वर्तितव्यमिति गुरुणादिष्टम् । तद्गच्छ । सुभद्रादेवीं स्नपय ।

**कुसुमावती**—ततो देवी महाराजस्य सेवायै नात्रागमिष्यति ?

**रुक्मिणी**—नूनं नैव । न तस्या अत्रागमनेऽपि तावदवसरः । कृता सेवा पर्याप्तेति गुरुभिरादिष्टम् । श्वो महापर्वकाले सर्वे समुद्रस्नानार्थं गमिष्यन्ति । तत्रैव चातुर्मास्यव्रतसमाप्तिं विधायामन्त्रयितव्यः स्वामी ।

**अर्जुनः**—( भयार्तमुद्रया ) हन्त, यस्माद् भीतोऽहं स एव दिवसः प्राप्तः । भवतु कापि मे दशेदानीम् ।

**कुसुमावती**—देवि, हस्तिनापुरादनागतेषु संबन्धिषु कस्मादयं मङ्गलभोजनसंभ्रमः।

**रुक्मिणी**—अयि मुग्धे ! अत्र विवाहे विघ्नः समुत्थितोऽतो हस्तिनापुरे मङ्गलकार्यमनुष्ठेयमिति दुर्योधनो मन्त्रयते । परेद्युः सर्वैस्तत्रैव गन्तुमितः प्रस्थातव्यम् । अतो भोजनाद्यद्यैव विधेयम् । भवतु । गच्छ त्वमिदानीम् । तत्र कार्यातिपातः स्यात् । सुभद्रा त्वां विना नान्यां स्नानकार्ये देह-स्पर्शेऽप्यनुजानीयात् ।

**कुसुमावती**—गच्छाम्येव । न काप्यत्र यतिसमीपे ।

**रुक्मिणी**—गच्छ त्वम् । अहं सेवार्थमत्र तिष्ठामि ।

**कुसुमावती**—यथाज्ञापयति देवी । ( निष्क्रान्ता । )

**रुक्मिणी**—(अर्जुनमुपेत्य, अञ्जलिं बद्ध्वा) आज्ञापयतु महाराजः। सेवायां सिद्धाहम्।

**अर्जुनः**—(हस्तधृतां गोमुखीमापातयन्) दग्धास्तु ते सेवा, दुःखदवार्तोच्चारिणी च रसना। इतो निर्गतायां भवत्यां सेवा मे सम्यगनुष्ठितेति मन्येय।

**रुक्मिणी**—अविधा। नासौ संन्यासी तत्त्वतः। कोऽपि कापटिकहतको दृश्यते। नो चेन् ननान्दुर्विवाहनिश्चयश्रवणेन कथमस्येदृशः कोपः।

**अर्जुनः**—(निरर्गलो भूत्वा, वक्षसि पाणिना स्पृष्ट्वा) अस्य सिंहस्य भागं स जम्बूको हरतीति श्रुत्वा कथं न कोपाविष्टो भवेदयं जनः। इमं वृत्तान्तं कथयन्ती सा ते जिह्वा न शतधा विदारितेति ते सुदैवं विद्धि।

**रुक्मिणी**—इदानीं सम्यग्ज्ञातम्। अर्जुन एवैषः। अरे मिथ्याचार अर्जुन, तव कपटाचरणं बहुदिनपर्यन्तं सुष्ठु परिपालितम्। मयाविष्कृतो वञ्चितोऽसि।

**अर्जुनः**—(स्वगतं) हा धिक्। कष्टं भोः। कोपावेशवशाद् देहभानं विस्मृत्य प्रमादः कृतः। तत् किमधुना विधेयम्।

**रुक्मिणी**—रे दाम्भिक, ऋजुतया कस्त्वमिति सम्यग्ज्ञापय। नो चेद् देवरदेवाय निवेद्य दम्भभङ्गं ते कारयामि।

**अर्जुनः**—(उत्थाय) भ्रातृपत्नि, केवलं तव कपटेनातिदीनः पार्थोऽयं त्वां शरणमागतः। अभयं देहि। (साष्टाङ्गं तां प्रणमति।)

**रुक्मिणी**—(सस्मिताऽर्जुनस्य पृष्ठं हस्तेन परामृशन्ती) किमेतदर्जुन। उत्तिष्ठ।

**अर्जुनः**—(पूर्ववत् स्थित्वा) मा मैवम्। विनाभयदानं नोत्थाने समर्थः।

**रुक्मिणी**—सत्यमेवाभयं ते। उत्तिष्ठ। कथं त्वया मतं, अहं त्वां वञ्चयेयमिति। परिहासविजल्पितं हि तत्। (अर्जुन उत्थाय स्वस्थान उपविशति।) पार्थ, सुभद्राकृतेऽस्मिन् साहसे प्रवृत्तस्त्वम्? कथं पुनस्ते विवाह इदानीं संभवेत्।

**अर्जुनः**—शृणु। यथा मे वेषस्तथा संन्यासोऽप्यलीकः। देवि, न तु मां मन्नाम्ना संबोद्धुमर्हसि। केनापि श्रुतं षट्कर्णे च गतं, सर्वमेव विनश्येत्।

**रुक्मिणी**—भवतु। अर्जुन, किं त्वमतः करिष्यसि।

**अर्जुनः**—बन्धुजाये, न तज्जाने। सुभद्रा दुर्योधनाय निश्चितं प्रतिश्रुतेत्याकर्ण्योदासीनेन मया संन्यासग्रहणं रैवतकपर्वते च निवसनं कृतम्। तदार्येण सत्यभक्तिनाऽहमत्रानीय स्थापितः। कथं पुनरितः सुभद्रासहितो गन्तुं शक्नुयां न जानामि।

**रुक्मिणी**—अर्जुन, अधुनैवं कुरुष्व।

**अर्जुनः**—कथं विधेयं तत्कथय। मा पुनः 'अर्जुन अर्जुन' इति संबोधय।

**रुक्मिणी**—इतः कर्णं कुरु। कर्णे ते कथयिष्यामि।

**अर्जुनः**—भवत्वेवम्। (कर्णं तत्समीपं कुरुते। रुक्मिणी कर्णे कथयति।)

**रुक्मिणी**—अवहितो भव। गच्छामि।

**अर्जुनः**—भ्रातृजाये, अपि जानातीदं श्रीकृष्णः। रोचेत वा तस्मा इदमाचरितम्।

**रुक्मिणी**—अलं पृच्छाभिः। ज्ञास्यसि सर्वं यथाकालम्। गच्छामीदानीम्।

**अर्जुनः**—न तवोपकारान् विस्मरिष्यामि।

**रुक्मिणी**—अधुना तव वेषानुरूपमाचरणीयम्। (नमस्करोति।)

**अर्जुनः**—(हसन्) नारायण। (रुक्मिणी निष्क्रान्ता।)

**अर्जुनः**—(स्वगतं)

(कर्नाटकी रागः—केदारगवळी, तालः—झंपा)

**मोचितं सर्वथा मां हि मन्ये॥ ध्रु०॥**
**रुक्मिणीमन्त्रितं सौख्यदं सांप्रतम्।**
**युक्तमेतद् भवेत् कालतः सुफलितम्।**
**वञ्चयेत् सा न मां स्निग्धचित्तम्॥**

कथं रुक्मिणीयं कपटिनी मायावती। 'अद्य मङ्गलदेवकार्यं, विवाहार्थं सत्वरं हस्तिनापुरं गन्तव्यं' इत्यादि मिथ्याभाषणैर्मां कोपान्वितं कृत्वा सत्यस्वरूपाविष्कारे प्रवर्तितोऽहं तया। धन्येयं स्त्री। कथं तु मत्प्रियेह नागतेति न तद्दर्शनं विना ज्ञातं भवेत्।

**सारङ्गनयना**–(अञ्जलिं बद्ध्वा) महाराज, देवी विज्ञापयति। मातृदेवतया केनचिन्निमित्तेन निजसंनिधावहं स्थापिता। अतः सेवाऽन्तरिता। तत् क्षन्तुमर्हति भवानिति।

**अर्जुनः**–हं, नारायण नारायण। (स्तब्धस्तिष्ठति।)

(नेपथ्ये)

(कथं न कोऽप्यत्र भोः।)

**सारङ्गनयना**–कोऽपि दर्शनार्थी समागतः। तद् गत्वा पश्यामि। (अन्तर्निष्क्रम्य पुनः प्रविश्य, स्वामिनं नमस्कृत्य च) महाराज, यादवसेनाधिपतिर्महाराजः सात्यकिर्भवद्दर्शनकामः संप्राप्तः। भवदाज्ञया तं प्रवेशयितुमिच्छामि।

**अर्जुनः**–(आगच्छतु स इति मूर्ध्ना निर्दिश्य) नारायण नारायण।

(ततः प्रविशति सारङ्गनयना सात्यकिना सह।)

**सारङ्गनयना**–यतिराजोऽयमुपविष्टः। उपसृत्य दर्शनं कर्तुमर्हति भवान्। (यतिं साष्टाङ्गं प्रणमति।)

**अर्जुनः**–(हस्तमुद्यम्य) नारायण नारायण।

**सात्यकिः**–(उत्थाय, अञ्जलिं बद्ध्वा) महाराज, आर्यहलधरो विज्ञापयति भवच्चरणयोः। 'श्वो महापर्वणि नागरिकजनैः सह समुद्रतीरं गमिष्यामि। वनभोजनानन्तरं सायं प्रतिनिवर्तिष्ये। यदि भवान् गन्तुमिच्छति तद् भगिनी देव्यपि सार्धमागमिष्यति। न चेत्साप्यत्रैव निवसेत्' इति।

**अर्जुनः**–वाः। भवन्तः सर्वे समुद्रस्नानार्थं गमिष्यथ तदहमत्र स्थित्वा किं कुर्याम्। सानन्दमागमिष्यामि। जनसमुदायसंपर्को न नो भवेदिति व्यवस्थातव्यम्।

**सात्यकिः**—यथाज्ञापयति स्वामी । न तत्र देवीं तत्सेवकांश्च विना कोऽपि दृश्येत भवद्भिः ।

**अर्जुनः**—वरमेतत् ।

**सात्यकिः**—अनुजानीहि मां गमनाय । (पुनः साष्टाङ्गं प्रणमति ।)

**अर्जुनः**—नारायण । (सात्यकिर्निष्क्रान्तः ।) (दासीं प्रति) मम माध्याह्नस्नान-सिद्धतां कर्तुं निवेदय । अहं तत्रैवैष्यामि ।

**सारङ्गनयना**—यथाज्ञापयति महाराजः । (इति निष्क्रान्ता ।)

**अर्जुनः**—(उत्थाय सानन्दं) रुक्मिण्या कर्णे मन्त्रितं सत्यं भवेदत्र न संशयः । श्व एवं करिष्यामि ।

(साकी)

दण्डं भङ्क्त्वा हीनं त्यक्त्वा वसनमथाहं सकलाम् ।
शस्त्रास्त्रयुतां यादवसेनां हन्यां मशकप्रायाम् ॥
अधुना मे नष्टा । बलिनो निखिला दुरवस्था ॥

(निष्क्रान्तः ।)

॥ इति चतुर्थोऽङ्कः ॥

## अथ पञ्चमोऽङ्कः ।

( ततः प्रविशति यतिवेषधार्यासनस्थो ध्यानरतोऽर्जुनः । समीपे सुभद्रा दासी च कुसुमावती तिष्ठतः । )

**अर्जुनः** – ( ध्यानं विसृज्य ) सच्चिदानन्द परमेश्वर नारायण ।

( सुभद्रा दासी च नमस्कुरुतः । )

**अर्जुनः** – नारायण ! अभीष्टवरप्राप्तिरस्तु ! सुभद्रे, अस्मद्विधानां यतिजनानां स्वच्छन्दवनविहारोऽयं नगरवसतेः सुखतरः । कतिपयदिवसांस्तवान्तर्गृहे बन्धस्थोऽहमासम् । अद्य तु पञ्जरमुक्तशुकवत् परमप्रीतोऽहम् ।

**सुभद्रा** – ( किंचित्स्मयमाना ) न पुनः पूर्णानन्दोऽद्यापि भवतो मयि संनिधौ शब्दायमानायाम् ।

**अर्जुनः** – नैवम् । न रसिकजनेभ्योऽसत्पीडा । न तु ते ता अरसिका दास्यो मे रोचन्ते ।

**सुभद्रा** – जानेऽहमेतत् । किं पुनः कुर्याम् । नाहं महाश्रमकार्येऽभ्यस्ता । अतः सेवार्थं ता इतस्तिष्ठन्ति । अद्य तु किमपि भवतु । अहमेव सर्वकार्याणि संपादयेयम् । तथा कृतेऽद्य भवतो मनोमोदः संभवेत् । ( दासीं प्रति ) अयि कुसुमावति, स्वाधीना त्वमद्य । सर्वे नागरिका यथाद्य सर्वतः क्रीडन्ति तथैव त्वयापि कार्यम् ।

**कुसुमावती** – देवि, भवतीदर्शनेनैव मे महोत्सवो नान्यथा । गच्छामि भवत्याज्ञानुसारेण, परं तु समीप एव तिष्ठामि कुत्रचित् । शब्दापयतु मां देवी कार्यवशात् । ( इति निष्क्रान्ता । )

**अर्जुनः**—सुभद्रे, तदद्य ममैकान्तसुखं दास्यति भवती । भवतु । अहमपि त्वदनुरूपामेव सेवां त्वत्तोऽङ्गीकरिष्यामि ।

**सुभद्रा**—( किंचिद्रुष्टेव ) यतिरेव भवानतो भाषणस्वतन्त्रः शोभसे ।

**अर्जुनः**—न वयमभ्यस्ताः प्रापञ्चिकैः सह संवादेषु । अतः क्वचित्प्रमादः । मा तत्र ते रोषः ।

**सुभद्रा**—नाहमद्वैतनिष्ठजनानां संभाषणैः परिचिता । अतः क्वचिदर्थस्य मिथ्याकल्पनेन मनसि क्रोधविकारः प्रादुर्भवत्येवम् । तत्क्षन्तुमर्हसि । ( अञ्जलिं बद्ध्वा प्रणमति । )

**अर्जुनः**—चतुरा त्वं सुभद्रे चतुरा त्वम् । तव सांनिध्ये क्षणवद्दिवसो दिवसवच्च संवत्सरः प्रतिभासेत ।

**सुभद्रा**—यथा क्षणोऽपि दिवसदीर्घो दिवसश्च वर्षदीर्घो न मे भवेत्तथा भगवता मय्याचरणीयं सर्वथा ।

**अर्जुनः**—( स्वगतं ) भाषणौघोऽन्यत्र नेयः । ( प्रकाशं ) सुभद्रे, इमं प्रातःकालसमयं विलोक्येदं मे मनसि वर्तते—

( सरणिः – केशवकरणी अगाधलीला )

कलेरुद्गमे भवेद्दुर्लभं सतां यथा दर्शनं
तथेदं नक्षत्रविलोपनम् ॥
कामक्रोधावलेश्चेतसः सता यथा निरसनं
तथेदं पश्यसि तिमिरायनम् ॥
तद्यथा सर्वथा मुनिमन उद्भासितं
नभ इदं प्रसन्नं तथाधुना लोकितम् ॥
अनुद्यमवतः श्रियो विनाशो यथा भवेदनुदिनं
तथेदं यामिन्या विलयनम् ॥

**सुभद्रा**—सत्यमेव प्रभातकालेऽस्मिन् सर्वं खलु रमणीयमवभासते ।

( सरणिः – कोन जाये त्रिजभी दधिवेचन )

[1]पुष्पपरागसुगन्धितशीतल इह वहति शनैर्वनमारुते
निःसृता विहङ्गमाः शाखिसमूहान्मञ्जुलनादं कुर्वते ॥ धृ० ॥
निबिडकुञ्जमुखे शिखिसंघाता भूषितवपुषो नृत्यपराः
शशकाः प्लवने रता जविनो हरिणाः शैले नागो राजते ॥ १ ॥

अर्जुनः – सुभद्रे, सागरतीरे योऽयं रैवतकशैलो दृश्यते तस्य शिखरात् समन्तात् पश्यतो रम्यतरं दृष्टिसुखमिदानीं संभवेत् ।

सुभद्रा – पुरा भवन्निवासेन भूषितां गुहां यदि मे भवान् दर्शयेत् तदागच्छामि ।

अर्जुनः – स कन्दर इतो नातिदूर एव वर्तते ।

सुभद्रा – साधु । गम्यताम् ।

अर्जुनः – इदमूर्णावस्त्रं प्रावृणोतु भवती । नान्यथा समीरवेगः सह्यः ।

( ऊर्णावस्त्रमङ्गुल्या निर्दिशति । )

सुभद्रा – गुरुभारमेतत् । दास्याऽऽनीतवसनेभ्यः किंचिल्लघुतरं ग्रहीष्यामि । यथोचितं प्रावृणुयाम् । ( अन्तर्गत्वा दुकूलं कक्षपुटे वस्त्राञ्चलप्रावृतं कृत्वाऽऽयाति । )

अर्जुनः – इत इतो भवती । ( पर्वताधिरोहं नाटयतः । ) सुभद्रे, असत्यातपतापेऽपि परिक्रमणश्रान्ता भवती ।

( रागः– कर्नाटकी, तालः– धुमाळी )

वदने स्वेदलवास्ते
करो नितरासे यतते ।
श्वासभरितमुर आस्ते
रक्तकपोलौ विद्येते ॥

तदत्र विश्राम्यतु भवती ।

सुभद्रा – भवानपि श्रान्त उपत्यकामिमामधिरुह्य । सुष्ठु पुनरहं निमित्तीकृता विश्रमाय ।

---

१ अत्र पद्यरचना यथागानं कृता मया । न सा मराठीमूलच्छन्दसैकरूपा । भेदस्तु स्वल्प एव

**अर्जुनः**—यथा भवती मन्यते। अत्र किंचिद्विश्रम्य गुहां तां गच्छावः। (निषीदतः।)

**सुभद्रा**—(नीचैर्दृष्ट्वेव) यतिराज, द्वारकायाः सकलनरनार्यः समुद्रतीरस्थेऽस्मिन्नुपवन एतत्पर्वतस्योपत्यकायां पिण्डीभूता इवेतो दृश्यन्ते। ततोऽहमेवं मन्ये।

(सरणिः—दोलोरे जोवन मधुमा० इति ठुंबरीविशेषः)

**श्रेष्ठिगिरिवरेणैषा नौका सागरमार्गेणानीता।**
**नरनारीविविधाकृतयस्ता वनहाटे ननु विक्रीताः॥**
**दृष्ट्वा मनसा मतमेतस्मिन्समये॥ दृष्ट्वा०॥**
**भूषालंकृतियुतजनताम्॥ १॥**

**अर्जुनः**—(सहास्यं) सुभद्रे, समुचितः कल्प एषः।

(उपर्युक्ता सरणिः)

**सुन्दरप्रतिकृतिरेषा नु मया चित्रगणात् प्रविचित्य धृता।**
**क्रयमूल्यमहं प्रष्टुमिदानीं श्रेष्ठिसंनिधौ निर्गन्ता॥**
**दृष्ट्वा मनसा मतमेतस्मिन् समये॥ दृष्ट्वा०॥ भूषालं०॥ २॥**

**सुभद्रा**—(किंचिल्लज्जामभिनीय स्वगतं) अयि, ममाङ्गुल्यैव ममाक्षिणी आकुलीकृते ननु। (प्रकाशं) यतिराज, विषयिजनसदृशमिदं भवद्वचनमद्यैव शृणोमि।

**अर्जुनः**—भोजने यथैकैव रुचिर्विरसतामावहति तथा नर्मसंभाषणेऽपि विनोदेन कालयापने विविधरसास्वादा अवश्यंभाविनः। तथा च वयमद्वैतवादिनो न क्वचनापि प्रतिषिद्धाः। सर्वं भाषमाणा अपि वयं वस्तुतोऽलिप्ता एव।

**सुभद्रा**—(स्वगतं) चिराय मेऽस्य पूर्ववृत्तान्ते जिज्ञासा। उचितावसराभावान्न समाहिता। तदद्य लब्धावसरा पृच्छाम्येव।

**अर्जुनः**—सुभद्रे, कथं स्तब्धा भवती। अपरमलंकरणं चिन्त्यते नु?

**सुभद्रा**—नैवं महाराज। किंचित्प्रष्टुकामाऽहम्। अकोपं प्रवक्तुमर्हति भवान्।

अर्जुनः—अनिर्बन्धेन यत्किंचित्प्रष्टव्यम् । नाहं कुप्येयम् ।

सुभद्रा—स्वनुष्ठिते संसारेऽपि प्रभूतं सौख्यम् ।

( साकी[1] )

सुन्दरललना स्थिरलक्ष्मीरथ गुणी सुतो यत्सदने ।
पौत्रद्रष्टा स लभेत सुखं स्वर्गाधिकमपि विजने ॥

एवं संसारसौख्यमीदृशे तरुणे वयसि कथं भवता परित्यक्तमिति निवेदनीयम् ।

अर्जुनः—संसारे सौख्यमिति वदतो व्याघात एव ।

( साकी )

निःसारे संसारे न सुखं सौख्यपरेयं भ्रान्तिः ।
वदने धृत्वा बालोऽङ्गुष्ठं निजलालायां सरतिः ।
मनसि पुनः कुरुते । मातृस्तन्यं निपीयते ॥

सुभद्रा—सत्यमेतत् । न त्विदं वैराग्यं कस्यापि जन्मतः सिद्धम् । कोऽपि हेतुस्तत्र संभवति । तत्कथ्यतां किंनिमित्ता भवद्विरक्तिः ।

अर्जुनः—किं ते कथयेयम् ।

( दिण्डी )

रूपशीलयुता सुता मातुलीया
प्रिया संजाता भाग्यतो मदीया ।
बान्धवैः प्रथमं संमतं तदासीद्
वचनभङ्गे प्रोद्यतास्ततो नीचाः ॥

सुभद्रा—( स्वगतं ) अविहा, केयं चमत्कृतिः ।

( ठुंबरी; सरणिः—हजारा मेरा कानका मोती )

जगति तथैव सर्वतो बन्धुः
परमनिर्दयो ननु कपटतोयसिन्धुः ।
श्यालकलक्ष्मीं परिवीक्षन्ते
नो चेन् ननु गुणबिन्दुः ॥

---

१ क्वचिच्चरणद्वयेनैव साकीछन्दः संपूर्यते ।

(प्रकाशं) ननु सा मातुलकन्यका स्वनिश्चये दृढाऽथवा स्वभ्रातृवत् तस्माद्विचलिता ?

**अर्जुनः**—न हि न हि। कथं सा सती वर्ण्यते। विरलास्तादृश्यो ललनाः।

अभङ्गः[1]।

(रागः – देस, तालः – दादरा)

**प्रिया मे स्थितैषा। मदर्थे क्षुधार्ता।**
**कृशा तथा जाता। विरहानलैः॥**
**असौ मता मूढा। कृता बन्धवासा।**
**बन्धुबान्धवैः सा। पीडितैवम्॥**
**न तु प्रेम तस्याः। चञ्चलं न चित्तम्।**
**निर्मलं नितान्तम्। निश्चलत्वे॥**

**सुभद्रा**—(स्वगतं) साधु कन्ये साधु। अहमेवेदृग्दुःखभाजनं विधात्रा निर्मितेति मया मतम्। न त्वेतत्। त्वमपि मादृश्येव मन्दभाग्या संजाता। (प्रकाशं) ततस्ततः।

**अर्जुनः**—ततः किं स्यात्। यथा यथा सा मदुपयमाय याचते तथा तथा तद्बन्धुगणोऽपि नासौ मे देयेति निर्बन्धवान्। ततो विरक्तः संन्यासी भूत्वाऽहं तीर्थयात्रासु भ्रान्तः।

**सुभद्रा**—स्वामिन्। भवच्चरित्रं मत्कथासदृशमेव। अत आवां समदुःखौ। अयं तु भेदः। संन्यासग्रहणेन दुःखमुक्तो भवान्। अहं तु दुःसहेऽत्र तापाग्नौ दह्ये।

**अर्जुनः**—सुभद्रे, कथय कथमुक्तमावयोः कथा सदृशीति।

**सुभद्रा**—पूर्वाश्रमे या भवतो मातुलकन्यका सैवाहमित्यवगम्यताम्। तथा कृते कथं मे दुःखमित्यनिवेदितमेव ज्ञातं भवेत्।

---

१ अक्षराणां ह्रस्वदीर्घपरिमाणे निरालम्बनं छन्द इदम्। अक्षरसंख्याऽत्र सामान्यपरिमाणम्। तत्रापि च बहवो भेदाः।

अर्जुनः—भवतु तत् । मम मातुलतनया तु कस्यापि कृते दुःखिता । क एवं ते ।

सुभद्रा—श्रूयतां महाराज ।

( कर्नाटकीया सरणिः – क्षीरसागर नम्मनी )

पाण्डुनृपो यस्य पिता । अथ कुन्ती यन्माता ॥
धर्मभीमबन्धुवृतः । विजयनामवान् ॥
देह एष तस्य कृते । समर्पितो धनुर्भृते ॥
गतिरन्या न हि कण्ठे । कृन्तितेऽपि मे ॥

सिध्यतु मेऽयं निश्चय इत्याशीर्वचो वितरतु भवान् ।

अर्जुनः—न सर्वेश्वरो दृढनिश्चयस्य फलमदत्तं रक्षति । ( स्वगतं ) अहह ! कोऽत्र संशयः । आविष्कृत्यात्मानं हराण्यत्रेमाम् । अथवा मैवम् । अपरां मनोहरां नियतिघटनां पश्यामि ।

सुभद्रा—यतिराज । बहुविश्रान्तमत्र । गुहां तामुपगच्छावः ।

अर्जुनः—तथास्तु । आगम्यताम् । ( परिक्रमणं नाटयतः । )

अर्जुनः—सुभद्रे, सैवेयं गुहा । महति मोदे कतिचन दिनान्यत्रायापयम् ।

सुभद्रा—अविधा । सदनवत् सर्वसुखप्रकारा अत्र निहिताः ।

अर्जुनः—न किंचन प्रागत्रासीत् । मयि निवसति भक्तजनैः सर्वमिदमनुष्ठितं ननु ।

सुभद्रा—गुहामुखे मण्डपोऽतिशोभनो विरचितः । किमपि विवाहमङ्गलमत्रानुष्ठितमिति प्रतिभाति ।

अर्जुनः—अनुष्ठेयं वेति कल्पितमपि युज्यते ।

सुभद्रा—यतिराज । गुहायामस्यां भ्रमणे मे स्पृहा समुत्पन्ना । अनुजानीहि मां गन्तुम् । न वा ननु वन्यश्वापदभयम् ?

अर्जुनः—नात्र किंचिद् भयम् । सुखेन गम्यतां दृश्यतां च ।

सुभद्रा—उपविशत्वत्रभवान् मण्डपेऽस्मिन् यावदहं गत्वाऽऽगच्छामि ।

**अर्जुनः**—एवमेव। (उपविशति। सुभद्रा गुहां प्रविशति।)

**अर्जुनः**—(स्वगतं) अनुरूपं स्थानमिदं हृदयाविष्काराय। अत :—

(रागः – कालंगडा; तालः – त्रिताल)

**करवै निजरूपाविष्करणम्॥**
**निरूप्य चरितं ममाधुना वा**
**कुर्यां सुन्दर्यपहरणम्॥**

अरे, कदाचिद् यादववीरा मामभिद्रवेयुस्तन्निराकरणाय न मे शस्त्रम्। तत्किं क्रियताम्। (अत्रान्तरे वसनराशिं धनुः शरांश्च गृहीत्वा सुभद्रा गुहाया निष्क्रामति।)

**सुभद्रा**—महाराज। गुहायां चरमकोण इदं संप्राप्तम्। तत् पश्यतु भवान् किमिदमिति। (तस्य पुरो वस्तूनि निदधाति।)

**अर्जुनः**—(स्वगतं) साधु। साधु। दैवं नामेदानीमनुकूलं मे। संन्यासग्रहणकाले मया वस्त्राणि धनुः शराश्च गुहायामस्यां निहिताः। विस्मृतं तु मया तत्सर्वमासीत्। युक्तावसरे तु प्रिययैव समधिगतम्। समीचीनमिदम्। चापो मे हस्तगतः। न मे प्रतिवीर इदानीम्। (प्रकाशं) सुभद्रे, इदं सर्वं कस्यापि राजपुत्रस्य भवेत्।

**सुभद्रा**—(वसनग्रन्थिमुन्मुच्य वस्त्रभूषणादि च वीक्ष्य) यतिराज। मन्ये परिचितपूर्वाणि वस्त्रभूषणानीमानीति? न स्मरामि तु कुत्र वा कथं वा।

**अर्जुनः**—ननु न तवार्जुनस्येमानि? यतः स वेषान्तरेण तीर्थाटनं करोतीति श्रूयते।

**सुभद्रा**—(स्वगतं) आकृतिवचनगमनादि सर्वमस्य पार्थसदृशम्। पूर्वाश्रमवृत्तान्तोऽस्य च ममाशाबन्धं पुनरुज्जीवितं करोति। एतन्निश्चयार्थे एवमेव संविधेयम्। (प्रकाशं) महाराज, मम किंचिदभीप्सितं पूरयितुमर्हति भवान्।

**अर्जुनः**—सुभद्रे, परिपूर्णमनोरथां करोमि त्वामद्य। केवलमुच्यतामभीप्सितम्।

**सुभद्रा**—महाराज, दैवतवत् पूज्यभावेन सेवितोऽसि मया। भक्तास्तु दैवतं विविधवेषैर्नटयन्ति दर्शनेन चात्मानं पुनन्ति। तथेदं वस्त्राभरणं परिहितवतो भवतो दर्शने मेऽभिलाषा।

**अर्जुनः**—(सानन्दं स्वगतं) रे प्रारब्ध, यावन्मे त्वया दुःखं प्रापितं तावतो हर्षस्येदं सुदिनमपि समानीतम् । (प्रकाशं) सुभद्रे, तवेच्छा प्रमाणम् । मुहूर्तमात्रं वेषमिमं तव कृते धारयामि ।

**सुभद्रा**—(तस्मै वस्त्रमर्पयित्वा) परिधीयतामिदम् । (अर्जुनः सकच्छं वसनं परिदधाति ।) अधुना सर्वाणीमानि वस्त्राभरणानि त्वां विभूषयन्तु । (तत्सर्वं तस्य परिधापयति । अर्जुनस्य सम्यङ् मूर्तिं दृष्ट्वा सचकितं त्रपते । मुखं परावृत्य स्वगतं) अविधा, सर्वथायं मे प्राणवल्लभसदृशः । ननु स एव भवेत् ?

(सरणिः – मंजुळ बोले)

**मन्नयनमाहितम् । लुब्धगात्रम् । संयमो वृथा ॥**
**चेतो हि तन्मयम् । आगतोऽयम् । मूर्तिमांस्तथा ॥**
**नरवर एषोऽत्र सत्यम् । शुचिमनसा पुनर्ज्ञातम् ॥**

ननु मुग्धे सुभद्रे, सदृशाकृतयो बहुतरा भवन्ति । मा रूपसादृश्येन वञ्चिता भव ।

**अर्जुनः**—कस्मात् सुभद्रे, मुखं परावृत्यैवं तिष्ठसि । परिधापितो नु सर्वो वेषः ।

**सुभद्रा**—(अर्जुनमभिवीक्ष्य) सर्वमितरत्परिहितम् । एकमुत्तरीयं तु नात्र दृश्यते ।

**अर्जुनः**—को विषादः । ममेमां शाटिकामेव स्कन्धे परिदधामि ।

**सुभद्रा**—(स्मृत्वेव स्वगतं) इदं दुकूलं समर्पयामि । यद्ययं प्राणनाथ एव, स तत् प्रत्यभिज्ञास्यति । (प्रकाशं) मा मैवम् । यद् दुकूलं मयाऽऽनीतं तदेव दास्यामि (तद्ददाति ।)

**अर्जुनः**—(दुकूलमुद्घाट्य सानन्दं) केयं चमत्कृतिः । स्वयं चित्रलेखनं कृत्वा मम नाम च तत्र लिखित्वा मम मातुलकन्यया यत्पुरा मे दत्तं तदेवेदं दुकूलम् । (सपरिहासं) न जाने कथमेतदनया नार्या समधिगतम् ।

**सुभद्रा**—(लज्जिताऽधोवदना स्वगतं सानन्दं) असंशयं प्राणनाथोऽयम् । (प्रकाशं) यतिराज, सा नार्येव भवन्मातुलकन्यका स्यात् । अतस्तया समधिगतम् ।

**अर्जुनः** — ( सुभद्रामुपगम्य तस्याः स्कन्धे करं निधाय ) सुभद्रे, किं त्वं वदसि न तज्जाने ।

**सुभद्रा** — ( तस्य हस्तं स्कन्धान्निःसार्य ) नेदमद्यापि ननु पर्याप्तं मे संशयनिमज्जनम् ।

**अर्जुनः** — अस्तु । ममातिप्रियं दुकूलं त्वया मेऽर्पितं, अतोऽहमपि ते किंचित्प्रियं दास्यामि । गृहाणेमां रत्नमालाम् । ( तस्याः कण्ठे रत्नमालां निधत्ते । )

**सुभद्रा** — ( मालां निर्वर्ण्य ) अयि, सैवासौ रत्नमाला या प्राणपतिना प्रेम्णा मे प्राक् समर्पिता । ( सपरिहासं ) कथं नु साऽनेनाधिगता । ( अधोमुखी स्मयते । )

**अर्जुनः** — हे मत्प्राणसंजीवनि प्रिये—

( सरणिः – मुला सांग नृपतीस० )

भूसितेजःपयोवायुवियदात्मकं
साक्षि सखि निष्ठितं पञ्चतत्त्वम् ॥

( तस्या दक्षिणहस्तं स्वकरे गृहीत्वा )

वीरपार्थेन ते स्वीकृतोऽयं करो
वीरपत्नीपदं भूषयेस्त्वम् ॥
प्रिये, चेतसस्ते त्यजेमां विशङ्कां
देहि सखि गाढमालिङ्गनं मे ॥

( तां समाश्लिष्यति । )

**सुभद्रा** — ( अर्जुनं समाश्लिष्य तस्य वक्षसि मूर्धानं निधाय )

( सरणिः – 'जिनी केसरीलो' इति गर्भाविशेषः; तालः – दादरा )

नाथ ते वृथा व्यथा सर्वथा कृता ।
अग्रहीद् भवानीदृशं यतिवेषं
सहत इह च वीरोऽयं गुरुनिन्दाक्लेशम् ।
सर्वमेव विस्मृतं; मे हितं संहितं तथा कथा ॥

**अर्जुनः** — ( तस्या हनू स्पृष्ट्वा ) प्रिये, सर्वं घटितं समीचीनमेव । यतः—

( ठुंबरी; सरणिः – अब मोरि छांड दे )

विहितं सर्वथा
वहुशोभा मीलने ससितौ रतिमदनौ यथा ॥
द्रुतं सुतप्तं युतमयोऽयसा तप्तेनात्र विरहिजना हि तथा ॥

अपरं च कथयामि। आवयोरिदं विस्मयावहं चरितं कवीनां नाट्यवस्तुत्वेन परिणंस्यति।

**सुभद्रा**—प्राणवल्लभ। न मे मतिः सर्वं घटितमाकलयति। त्वया रक्षितमिदं दुकूलं कथं मयाधिगतं, कथं वा मत्कण्ठगता रत्नमाला तव हस्तयोः पतिता।

**अर्जुनः**—प्रिये, अत्र यावदहं जानामि तावत्ते कथयामि (कर्णे पूर्ववृत्तान्तं कथयति।)

**सुभद्रा**—तस्मिन् वनेऽत एव दृष्टस्त्वं मया। दुःखमूढया मया तु रक्तलाञ्छितं भवन्मुखमण्डलं न प्रत्यभिज्ञातम्। अवभासस्तु प्रतीत एव। प्राणनाथ, अपि कोऽयं राक्षसः स्याद् येनाहं वन आनीता। कथं ज्ञास्यामि यथा स्वमन्दिरे पुनरागता।

(ततः प्रविशति राक्षसः।)

**राक्षसः**—(अञ्जलिं बद्ध्वा) महाराज, दुर्योधनः सुभद्रादेवीं न प्राप्नुयादिति श्रीकृष्णाज्ञया मङ्गलमुहूर्त एवेयं घोरवने मया नीता। सन्देशसंपुटं सरत्नमालं तत्र निक्षिप्य पुनः सा मन्दिरे स्थापिता।

**सुभद्रा**—अरे रे! मत्कृते कृष्णेनैवं कृतेऽपि तमहं भृशमनिन्दम्।

**राक्षसः**—तात, अम्ब, बालकोऽयं घटोत्कचो भवच्चरणयोः प्रणमति। (नमस्करोति।)

**अर्जुनः**—अरे, भीमपुत्रो घटोत्कचोऽयं किल! एहि वत्स, परिष्वजस्व माम्। (परिष्वज्य) वत्स, तदा तव देहाद् रुधिरं निष्कासितं मयेति दूये।

**राक्षसः**—तात। न मे दुःखमत्र। प्रत्युत हृष्टोऽस्मि।

**अर्जुनः**—नन्वभिनन्दिष्यति ते पिता मत्कार्ये सहायभूतं त्वाम्।

**सुभद्रा**—(पुनरर्जुनं समाश्लिष्य) प्राणनाथ, अन्यत् किंचिद् भवताऽनुष्ठेयम्। संन्यासग्रहणेन लोकनिन्दास्पदत्वमेवाधुना नीत आत्मा।

**अर्जुनः**—मया सर्वं तव निवेदनानुसारेणैव कृतम्।

**सुभद्रा**—ननु मया संन्यासग्रहणमुपदिष्टम्।

**अर्जुनः**—अथ किम्। न केवलं वचनमिदं मे। तव लेखमपि दर्शयेयमत्र विषये। यस्मिन् संपुटेऽनेन घटोत्कचेन तव कण्ठगता रत्नमाला तत्र निक्षिप्ता तस्मिन्नेव तवायं लेख आसीत्। (तस्यै पत्रं समर्पयति।)

**सुभद्रा**—(लेखं वाचयित्वा) इदमक्षरलेखनं मत्सदृशं न पुनर्ममेदम्।

(सहसा प्रविशति कृष्णः।)

**कृष्णः**—वत्से, अर्जुन एव पतिस्त्वया वरणीय इति यो व्यूहो मया रचितस्तत्र समीहितसिद्धौ त्वत्सदृशलेखनं कृत्वा पत्रमिदं मया लिखितमिति जानीहि।

(सुभद्रा लज्जिताऽर्जुनस्य पश्चात्तिष्ठति।)

**कृष्णः**—(अर्जुनाभिमुखं) विजयतां मे वयस्यः परमप्रयत्नसंपादितेष्टकलत्रः।

**अर्जुनः**— कृष्ण, न ज्ञातमिदं ते प्रसादरहस्यमतो निन्दितवानहं त्वाम्। तत्क्षन्तुमर्हसि। (इति तं संश्लिष्यति।)

**सुभद्रा**—(कृष्णं नमस्कृत्य सबाष्पं) कृष्ण, तव मय्युपकृतिराशिं प्रवक्तुं नाहं क्षमा।

**कृष्णः**—(तां समीपे कृत्वा, अश्रूणि प्रमृज्य) यदि मयाऽन्यार्थं प्रयतितं तदोपकृतिः। मया किल स्वकर्तव्यमाचरितम्।

**सुभद्रा**—महानेको विघ्नोऽद्यापि तिष्ठति। कथं नन्वार्यहलधरसमाराधनं कुरुषे।

**कृष्णः**—मा ते तत्र चिन्ता। मद्वचनमनुसरतम्। घटोत्कच, अर्जुनस्य यतिवेषमिमं पर्वतमूले निक्षिप। अनयोश्च पृष्ठचरो भव। प्राप्ते च प्रसङ्गे मम निदेशं पालय।

**राक्षसः**—यथाज्ञापयति देवः। (तत्सर्वं गृहीत्वा निष्क्रान्तः।)

**कृष्णः**—पार्थ, त्वमधुना सुभद्रया सह पूर्वस्थले शनैरागच्छ। अहमग्रतो यामि। (निष्क्रान्तः।)

**अर्जुनः**—प्रिये, आगच्छ तेनैव मार्गेण। बलरामं दृष्ट्वा प्रकाशमेव विवाह-बद्धौ भवाव।

**सुभद्रा**—आगम्यताम्। (उभौ किंचित्परिक्रामतः।) महाभीतिर्ममोरसि। तस्य क्रोधो भयावहः।

**अर्जुनः**—( सावज्ञं ) किं करिष्यति स वराकः । धनुष्पाणिरहं न यमादपि बिभेमि । ( उभौ निष्क्रान्तौ । )

( नेपथ्ये, 'धावत धावत' इति कोलाहलः । )

इति विष्कम्भकः ।

( ततः प्रविशति गदाहस्तः कोलाहलं शृण्वन् बलरामः । )

**बलरामः**—( स्वगतं ) कथमकारण आक्रोशोऽयम् । कः कोऽत्र भोः ।

( अञ्जलिं बद्ध्वा लम्बकूर्चनामा राक्षसः प्रविशति । )

**लंबकूर्चः**—( नमस्कृत्य ) महाराज । काचिदतिदुःखदा वार्ता वर्तते । भवते कथनीयैव ।

**बलरामः**—( सभयं ) कथय कथय किं जातम् ।

**लंबकूर्चः**—महाराज, देवीं सुभद्रां गृहीत्वा स दाम्भिको यतिः पलायितः ।

**बलरामः**—( कोपेन तमभिद्रुत्य ) रे निर्लज्ज निर्बल नपुंसक यावदिदं घटितं तावत्त्वं तव च रक्षकसहस्रबलं किं सुप्तमासीदाहोस्विन् मृतम् । रे कृतघ्ना-स्तिष्ठत । अत्रापराधात् सर्वान् युष्मान् यमसदनं प्रेषयामि । क्वासौ कृष्णः । कः कोऽत्र भोः । रथं मे सज्जीकुरुत ।

( अनुष्टुभ् । )

**निर्मथ्य सकलां भूमिं व्योम संभिद्य पातये**
**यतिं हन्यां नृशंसं तं कुतो मत्तः पलायते ॥**

( ततः कृष्णः प्रविशति । )

**कृष्णः**—आर्य, कुत एतावान् संतापः ।

**बलरामः**—कथं नाद्यापि जानासि । स यतिः सुभद्रां गृहीत्वा पलायित इति वदन्ति ।

**कृष्णः**—प्रागेवेदं कथितं मया । न तु श्रुतं मतं वा भवता ।

**बलरामः**—( कृष्णाभिमुखः क्रोधेन ) कृष्ण, ज्ञायते मया यत् सर्वोऽयं ते कपट-प्रबन्धः । जानामि सम्यक् । प्रतिसमीप्सितमेवं विघ्नं करोषि । ममाप्य-

रुचिरिदानीं सर्वत्र। किं मे राज्येन वा प्रपञ्चेन वा। संन्यासं स्वीकृत्य यत्र कुत्रचिदपि निर्गच्छामि। कः कोऽत्र भोः। मे संन्याससिद्धतां कुरुथ।

(ततः प्रविशति यतिवेषजातं वहन् कश्चिद् भृत्यः।)

**भृत्यः**—गृह्णातु महाराज इमं यतिवेषम्।

**बलरामः**—साधु। कृष्ण, साधु। केयं सिद्धता कृता मे संन्यासग्रहणे।

**कृष्णः**—आर्य। शृणवाव प्रथमं किमेष भणति। अलं विपरीतग्रहणेन।

**बलरामः**—(तिरस्कारेण) शृणु त्वमेव तद्वचनम्।

**कृष्णः**—(भृत्यं प्रति) किं भणसि। सम्यक् कथय।

**भृत्यः**—शृणोतु महाराजः। सेनापतिः सात्यकिः सुभद्रान्वेषणपरः पर्वतमूले वेषमिमं समधिगतवान्। तं मे दत्वाऽहमग्रे प्रेषितस्तेन। स सर्वं सम्यगवगतं कृत्वा मामनुसरति।

(सात्यकिः प्रविशति।)

**सात्यकिः**—विजयेतां महाराजौ। आनन्दवार्तां कथयितुमागतः।

**बलरामः**—(शान्तो भूत्वा) वत्स, शीघ्रमुच्यताम्।

**सात्यकिः**—देवी सुभद्रा केनचित्तरुणेन सुन्दरराजपुत्रेण मोचिता। तया सह च स एतस्माद् गिरेरवरोहति। तेन स दाम्भिको यतिर्दण्डितस्तद्वेषश्च पर्वतमूले निष्कासितो मया समासादितः। अग्रत एव स प्रेषितो मया।

**बलरामः**—कः स राजपुत्रो भवेत् सात्यके।

**सात्यकिः**—दूरत एव दृष्टं तं न निश्चयेन जानामि। प्रायः स राजा दुर्योधन इति मे मतम्।

**बलरामः**—भवतु स कोऽपि। येन ममेदमुपकृतं तस्य मयार्पिता मे सुभद्रा।

**कृष्णः**—आर्य, सुविचार्य वक्तव्यम्। दुर्योधनाय प्रतिश्रुतासौ भवता।

**बलरामः**—अरे यदि स दुर्योधनः स्याद्वरमेवम् । नो चेन् मच्छिष्य एव दुर्योधनः । सान्त्वयेयमहं तं कथमपि । सात्यके गच्छ शीघ्रम् । तं राजपुत्रं सुभद्रया सहात्रानय । उत्कण्ठितोऽस्मि तद्दर्शनाय ।

**सात्यकिः**—यथाज्ञापयति देवः । ( निष्क्रामति । सुभद्रार्जुनसहितः पुनः प्रविशति ) इत इत आगम्यताम् । उत्कण्ठितोऽयं महाराजो भवद्दर्शनाय ।

**बलरामः**—( पदद्वयमग्रतो गत्वा ) साधु । वीरशिरोमणे, साधु । प्रत्युपकृतित्वेन सुभद्रेयं ते समर्पिता मया । ( अर्जुनं प्रत्यभिज्ञाय ) घातितोऽहम् । अजानतो मे वचनमिदं न परमार्थेन गृह्यताम् । ( क्रोधेन ) रे चण्डालाधम पार्थ, कथमेवं कपटेन सुभद्रां प्राप्तुमीहसे । तद् गृहाणैतां गदां न सुभद्राम् । प्रहरामि । ( प्रहर्तुमर्जुनमभिधावति । तावदेव गर्गमुनिरागत्य तं हस्ते नियच्छति । )

**गर्गमुनिः**—मैवम् । मैवम् । बलराम । मा ते वचनभङ्गो भवतु । अवहितो भव । प्रकृतिमापद्यस्व । कथमर्जुनं निहत्य भगिन्या वैधव्याय स्पृहयसि ।

**बलरामः**—( गदां निक्षिप्य ) महाराज, एतयैव गदया मां शिरसि प्रहरतु भवान् ।

**गर्गमुनिः**—राम ! प्राज्ञतरो भूत्वा कुत एतन्मुग्धवदाचरणम् । ननु विश्वसिषि मयि ? न तवाशुभं सहिष्ये ।

**बलरामः**—गुरुराज, भवद्वचनामृतं निपीय नष्टो मे सर्वसंतापः शान्तश्चाहम् ।

**गर्गमुनिः**—शृणु तावत् । अर्जुन एव सुभद्रायोग्यः पतिः । सुभद्रापि तस्यानुरूपा पत्नी । यदुपाण्डूनां पूर्वसम्बन्ध एवमेव वर्धतामिति तं सर्वेश्वरं प्रार्थये ।

**बलरामः**—( शान्तो भूत्वा ) यथाज्ञापयति गुरुदेवः । न भवद्विरुद्धमाचरामि ।

**गर्गमुनिः**—तन्मम समक्षमेव सुभद्रापाणिमर्जुनकरे देहि । क्रोधं च विहायार्जुनमभिनन्दस्व । स्नेहं च तस्मिन् वितर ।

**बलरामः**—यथाज्ञापयति गुरुदेवः ।

**गर्गमुनिः**—पार्थ ! बलरामं प्रणम ।

**अर्जुनः** – आर्य, अभिवादये। (तथा करोति।)

**बलरामः** – (सुभद्राहस्तं गृहीत्वा, अर्जुनं प्रति) वत्स।

(साकीपूर्वार्धः)

**गृहाण भगिनीकरं धनंजय पाणौ ते संदत्तम्।**

**अर्जुनः** – (उत्तरार्धं पठति।)

**अत्यादरपूर्वकं तदीयं स्वीकरणं मद्विहितम्॥**

**कृष्णः** – (पठितान्तं गायति।)

**अस्तु सदा कुशलम्। विलसतु सुतरत्नेन कुलम्।**

(तावदेव प्रविशति रुक्मिणी।)

**रुक्मिणी** – ननान्दर्। ननु मया सह वर्जितं भाषणं पुनः करिष्यसि? संन्यासी ह्येव पतिर्वृतो भवत्या।

**सुभद्रा** – (अधोमुखी लज्जिता) भ्रातृजाये, वचनीया नन्वहम्।

**गर्गमुनिः** – परिपूर्णास्ते मनोरथाः पार्थ। अपरमपीप्सितं वृणीष्व।

**अर्जुनः** – महाराज, भवत्प्रसादेन पूर्णा मे सर्वे मनोरथाः। किमन्यद् याचितव्यम्। तथापि दाने समर्थो भगवान्। अत इदमस्तु।

भरतवाक्यम्।

(पृथ्वीवृत्तम्।)

**समाऽस्तु नृपधीस्तथा सदयतास्तु तच्चेतसि**<br>
**प्रजासु निजदेशवैभवकृतिश्च सा वर्धताम्।**<br>
**करोतु कविता-कृतौ कविसहायतां शारदा**<br>
**शिवः सुकविवाचि तां जनयतां जनानां रतिम्॥**

**गर्गमुनिः** – (करमुद्यम्य) तथास्तु।

(सर्वे निष्क्रान्ताः।)

**॥ इति पञ्चमोऽङ्कः ॥**

# ANNASAHEB KIRLOSKAR

## A short life sketch

The late Shri Balwant Pandurang alias Annasaheb Kirloskar, the author of the Marathi Musical comedy 'Sangeeta Saubhadra', was born on 31st March, 1843 at Gurlhosur in Belgaum District, now in Mysore State. The family originally came from a village 'Kirlosi' in Ratnagiri District. He studied Marathi, Sanskrit, Kanarese and English upto 1854. He was married when he was 14, an age at which he showed promise of writing poetry. Even at this young age, he used to organize festivals including the birth anniversary of Shri Śankarāchārya.

After spending a few years at Dharwar, Annasaheb came to Poona for education in 1863. His great devotion to drama started and developed from that stage. He borrowed from money-lenders and organized a small anonymous dramatic troupe in 1865, and started the programmes in Ahmednagar, since to perform in Poona was considered too risky for the reputation of the persons concerned. To be an actor was not the idea of a gentlemanly life in those days. Nor did others in the family approve of this step when it became known and he was brought back home to Gurlhosur in 1866. He went to Belgaum in 1868 in search of a job and was appointed as an Assistant Teacher in the Anglo-Vernacular school. He stayed here upto 1874, carrying out the professional duties but always longing for the stage. During this stay, he published his first play Śānkaradig-vijaya, based on the life of the Philosopher-Saint Shri Śankarāchārya. This play was staged for some time and it proved to be the beginning of Annasaheb's career as a playwright.

He left teaching and joined the police for some time, but later joined the office of the Revenue Commissioner at Belgaum in 1878. Along with the Commissioner, he came to Poona in 1880. Poona at this time was buzzing with Chiplunkar, Ranade, Tilak, Gokhale, Agarkar. Annasaheb, on his arrival there, produced in October, 1880, his second play 'Sangeeta Śākuntala' translated from Kālidāsa's play. He became famous overnight and Poona accepted him. In November, 1880, the play was staged in Bombay. Annasaheb himself used to play the roles of सूत्रधार and कश्यप. Dr. Kielhorn, Dr. Bhandarkar, Justice Telang and others were immensely pleased by this production.

Annasaheb produced the first three acts of the संगीत सौभद्र in November 1882, in Poona. It caught the audience completely unawares in its charm and since then, the spell still holds. He then became the head of a regular dramatic troupe, leaving all other interests. The drama in full five acts was ready in March, 1883. He used to act the parts of सूत्रधार and बलराम in सौभद्र with Moroba Waghulikar (अर्जुन), Balkoba Natekar (कृष्ण), and Bhaurao Kolhatkar (सुभद्रा) as his principal associates. He subsequently started to write संगीत रामराज्यवियोग deriving his inspiration from भवभूति's उत्तररामचरितम् in 1884 but it was not destined to be completed by him. He suddenly died on 2.11.1885 at the age of 42 at Gurlhosur. Earlier in the year, he had become the employee of the Indore Durbar.

Annasaheb was a poet and a playwright of a high order and richly deserved the honour bestowed on him as the founder of the modern Marathi stage ● ● ●

# सौभद्रसूक्तिसंग्रहः।

अनुक्रमः पृष्ठे

| अनुक्रमः | | पृष्ठे |
|---|---|---|
| १८ | आमरणान्तो विवाहग्रन्थिः । | ५३ |
| १९ | प्रपञ्चे बन्धुकलहबीजं स्त्री किल । | ५३ |
| २० | यामिन्याः समयलयेऽभ्युदयमुषा आहरेत् । | ५५ |
| २१ | मायाकर्तृत्वं विचारयन् पुरुषो व्याकुलीभवति । | ५९ |
| २२ | अनुद्यमवतः श्रियो विनाशो यथा भवेदनुदिनम् । | ६८ |
| २३ | भोजने यथैकैव रुचिर्विरसतामावहति । | ७० |
| २४ | संसारे सौख्यमिति वदतो व्याघात एव । | ७१ |
| २५ | जगति तथैव सर्वतो बन्धुः । | ७१ |
| २६ | न सर्वेश्वरो दृढनिश्चयस्य फलमदत्तं रक्षति । | ७३ |
| २७ | द्रुतं सुतप्तं युतमयोऽयसा तप्तेनात्र । | ७६ |

# सौभद्रान्तर्गतपद्यारम्भसूचिः।

कथालेखक दिनकर द. पाटील यांचें
ग्रामीण जीवनावरील पहिलें लिहिलेलें

**दसरा उजाडला**

दोन रुपये

सू. य. जावकर यांचें
संगीत सामाजिक नाटक
फक्त एक स्त्री पात्र असलेलें

**अठरा वर्षानंतर**

दीड रुपया

डॉ. सौ. चारुशीला गुप्ते यांचें
संगीत तीन अंकी नाटक

**आम्ही सारेच वेडे**

एक रुपया

श्री. पुरुषोत्तम दारव्हेकर यांचें
सरकारी नाट्यस्पर्धेत २००० रुपयांचें
पहिलें बक्षीस मिळालेलें

**चन्द्र नभींचा ढळला**

दोन रुपये

: नाटकांचें माहेरघर :

**जयहिंद प्रकाशन**

**झावबाची वाडी : मुंबई २**

Born in 1915 in Ratnagiri District, Shri S. B. Velankar graduated from the Wilson College, Bombay, securing first-class in University Examinations and bagging numerous prizes and scholarships including the ZALA VEDANTA. He topped the list of successful candidates in the M.A. examination in 1937 He passed LL.B. in 1940.

Sanskrit was his principal subject in the University Examinations. His original contribution to the Sanskrit literature started with poems विष्णुवर्धापनम् ( 1947 ) and गुरुवर्धापनम् ( 1953 ) which he wrote in homage to Shri V. R. Velankar, an industrialist of Sangli and Prof. H. D. Velankar, his revered Guru in the Wilson College, respectively. His sanskrit rendering of जयमङ्गला ( 1959 ), a longer narrative poem by Maharashtra Kavi Yeshwant and his जीवनसागरः ( 1960 ), a lyrical homage to M. M. Dr. P. V. Kane, Sanskrit Scholar of renown and National Professor, brought him both prestige and reputation. The present book, viz. संगीतसौभद्रम् is a successful attempt at rendering into sanskrit the original famous Marathi play Saubhadra by the late Annasaheb Kirloskar, the pioneer of Sangeeta plays in Maharashtra.